श्रीः ।

# महावाक्यरत्नावलिः

नाम

श्रीमत्परमहंसपरिव्राजकाचार्यरामचन्द्र-
यतिग्रथितेशावास्याद्यष्टोत्तरशतो-
पनिषत्सारसंग्रहः ।

---

मूल्यं आणकद्वयम्.

श्रीः ।

# महावाक्यरत्नावलिः

नाम

श्रीमत्परमहंसपरिव्राजकाचार्यरामचंद्र-
यतिग्रथितेशावास्याद्यष्टोत्तरशतो-
पनिषदां सारसंग्रहः ।

पणशीकरोपाह्वलक्ष्मणात्मजवासुदेवशर्मणा संशोधितः

( चतुर्थं संस्करणम् )

मुम्बय्यां

तुकाराम जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये रा. य. शेडगे
द्वारा मुद्रयित्वा प्रकाशितः ।

शकाब्दः १८३५, —खीस्ताब्दाः १९१३.

मूल्यं आणकद्वयम्.

# प्रास्ताविकम् ।

विदितमेवैतदार्यैर्यदत्र महापाप्मकामक्रोधारातिवशीकृतमनोभिरविरतमुपभुक्तास्वपि प्राज्यसाम्राज्यभूतिषु हविषा हविर्भुगिवाहार्दिवं वरीवृध्यत आशापिशाचिका रमणीयचरणानामपीति । श्रुतिषु चासकृदेतदेव जेगीयते—'अन्धं तमः प्रविशन्ति ये संभूतिमुपासते' । 'इमं लोकं हीनतरं चाविशन्ति' इत्यादिना । अनुष्ठितेष्वपि यथाविधि यज्ञेज्यादिधर्मेषु, आघ्रातेष्वपि वृन्दारकवृन्दमन्दारमकरन्देषु, आहिण्ड्यमानास्वपि मीमांसातर्कव्याकृतिमहाटवीषु नातिशेरते पामरमनुकूलादिप्रवृत्तिषु विद्वांसः । एवं ह्यत्र गायन्ति छन्दोगाः—नारदो हि भगवान्वशीकृतकरणः सुरासुरकिरीटतटनिघृष्टचरणे भगवति निवेशितमनाः सनात्कुमारादीनभ्येत्य श्रुतंहि भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं शोचामि तन्मां परं पारं शोकमहोनिधेः प्रापयन्त्विवति तानस्तौत् । ते च विहितादरं तं सम्यक्प्रत्यगात्मदर्शनं व्याचख्युः । तेन स भृशमात्मनात्मनि तुतोषेति । तदेतत्स्थाने यदात्मानुशासनमेवं केवलं सुखाकरोतीति सर्वैस्तदादरणीयम् । एवं सत्यपि तदेकदेशः पुरुषायुषेणाप्युपढौकयितुं न शक्यते किमु वक्तव्यमनेकशाखामण्डलभिन्नचातुर्वर्ण्याश्रमनित्यानुष्ठातव्याद्यनेकविधविभागादिमच्छ्रुतिकदम्बरत्नाकरालोडनं न स्यादिति ।

नह्यृते श्रुतिशिरोभागमहावाक्यकुसुमानि सौरभयितुमुत्सहन्तेऽन्ये सांख्याक्षपादादयः। द्वैतिनो हि ते सांख्यादयः, द्वैताच्च भयं व्याहरच्छ्रुतिः अपि चाद्यत्वेति अन्यसत्वे दुःखाकरोत्यप्रतिरथमपि विषयजातमिति सर्वेषां नः प्रत्यक्षमेतत्। अस्माच्चदुःखव्रातादुद्दिधीर्षन्त्युपनिषन्महावाक्यरत्नानि 'तत्त्वमसि', 'अयमात्मा ब्रह्म' इत्येवंजातीयकानि। न हि स्वाज्ञानकल्पिताहंममेत्यादिभेदकलुषीकृतभूमभावस्य निरस्तसमस्तौपाधिकस्योपनिषन्महावाक्योत्थैकत्वविज्ञानेनोन्मथितः कृताकृतादिद्वैतप्रपञ्चो भूयः प्रत्यवतिष्ठते। तत्र 'को मोहः कः शोक एकत्वमनुपश्यतः' 'केन कं विजानीयात्' इत्यसकृदभिहितत्वात्। सर्वथापि दुःखजालावरुद्धानादिमायासुप्तजीवानुद्बोधयितुं प्रभवन्ति वेदान्तार्णवलसन्महावाक्यरत्नानि 'अहं ब्रह्मास्मि' इत्यादीनीति सिद्धमिति कृतिमतो नातः परमस्त्यन्यत्कर्तव्यनिकषायमाणं, नातोऽन्यश्च पुरुषार्थ इति तदाविष्करणेन मुमुक्षूपसेवनं विधायात्मानं पुनामीति चिरायापश्यं महान्तं च श्रममकार्षं तान्युपादातुं समाप्नवं च नातिशुद्धानीव द्वित्राणि लिखितपुस्तकानि पर्यशोधयं च यथास्वं प्रायशोऽतिरोहितार्थत्वान्न व्याख्यानमयोजि। किं बहुना। तदस्य समीक्षणेन सफलयन्त्वस्मच्छ्रमं समनुभवन्त्वानन्दसंदोहं अधिरोहन्तु परमं पदं कृतार्थयन्तु सुदुर्लभं मानुषवर्ष्मेत्यभ्यर्थना॥

# महावाक्यरत्नावलिस्थविषयक्रमः ।



इति विषयानुक्रमणिका संपूर्णा ।

---

## पञ्च शान्तयः ।

वाङ्-पूर्ण-सहना-प्यायं-भद्रंकर्णेभिरेव च ।
पञ्च शान्तीः पठित्वादौ पठेद्वाक्यान्यनन्तरम् ॥

इत्युक्तं ताश्च—

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि ॥ वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्त्संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम् ॥ ॐशान्तिः शान्तिः शान्तिः ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः-श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकारणं मे अस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳस-स्तनूभिः । व्यशेम देव हितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ५ ॥

इति पञ्च शान्तयः ।




# महावाक्यरत्नावलिः

## मङ्गलाचरणम् ।

ॐ श्रीमद्विश्वाधिष्ठानपरमहंसाय नमः ।
यो विश्वादिविदेहान्तमहावाक्यार्थविग्रहः ॥
श्रीरामचन्द्ररूपाय तस्मै भूमात्मने नमः ॥१॥
यः पूज्यो यतिभिः स्वधर्मनिरतैर्ध्यायन्ति यं
योगिनो येनात्तं निगमान्तवेद्यमनिशं यस्मै ह-
विर्दीयते ॥ यस्मात्स्थावरजङ्गमं समभवद्यस्यां-
शमात्रोऽवरो यस्मिंल्लीनमिदं प्रणौमि सततं
तं वासुदेवं गुरुम् ॥ २ ॥ नत्वा श्रीवासुदेवे
न्द्रपादपङ्केरुहद्वयम् ॥ ग्रथ्यते वै महावाक्यर-
त्नावलिरियं मया ॥ ३ ॥

---

## अष्टोत्तरशतोपनिषदः ।

अथ खल्वृग्वेदादिविभागेन वेदाश्चत्वारः ॥ तत्रैकविंशतिशाखा ऋचः ॥ नवाधिकशतशाखा यजुषः ॥ सहस्रशाखाः साम्नः ॥ पञ्चाशच्छाखा अथर्वणस्य ॥ एकैकस्याः शाखाया एकैकोपनिषत् ॥ आहत्याशीतिसहितशताधिकसहस्रसंख्याका उपनिषदः ॥ तासु श्रीरामचन्द्रेण रामदूताय सारतरोपनिषद अष्टोत्तरशतसंख्याका उपदिष्टाः ॥ तथाच मुक्तिकोपनिषत्स्थाष्टोत्तरशतोपनिषन्नामश्लोका लिख्यन्ते—'ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः । ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा ॥ १ ॥ ब्रह्म कैवल्यजाबालौ श्वेताश्वो हंस आरुणिः ॥ गर्भो नारायणो हंसो बिन्दुनादशिरः शिखा ॥२॥ मैत्रायणीकौषितकीबृहज्जाबालतापिनी ॥ कालाग्निरुद्रमैत्रेयी सुबालक्षुरिमन्त्रिका ॥ ३ ॥

सर्वसारं निरालम्बं रहस्यं वज्रसूचिकम् ॥ ते-
जोनादध्यानविद्यायोगतत्त्वात्मबोधकम् ॥ ४ ॥
परिव्राट्त्रिशिखी सीता चूडा निर्वाणमण्डलम् ॥
दक्षिणाशरभं स्कन्दं महानारायणाद्वयम् ॥५॥
रहस्यं रामतपनं वासुदेवं च मुद्गलम् ॥ शा-
ण्डिल्यं पैङ्गलं भिक्षुं महच्छारीरकं शिखा॥६॥
तुर्यातीतं च संन्यासं परिव्राजाक्षमालिका ॥ अ-
व्यक्तैकाक्षरं पूर्णा सूर्याक्ष्यध्यात्मकुण्डिका॥७॥
सावित्र्यात्मा पाशुपतं परं ब्रह्मावधूतकम् ॥
त्रिपुरा तपनं देवी त्रिपुरा कठभावना ॥ ८ ॥
हृदयं कुण्डलीभस्मरुद्राक्षगणदर्शनम् ॥ तार-
सारमहावाक्यपञ्चब्रह्माग्निहोत्रकम् ॥ ९ ॥गो-
पालतपनं कृष्णं याज्ञवल्क्यं वराहकम् ॥ शा-
ट्यायनी हयग्रीवं दत्तात्रेयं च गारुडम् ॥१०॥
कलिजाबालिसौभाग्यरहस्यऋचमुक्तिका इति॥
(ईशाद्यष्टोत्तरशतोपनिषदां शाखाभेदं दर्शयति)

तत्र दशोपनिषदः ऋग्वेदगताः ॥ शुक्लकृष्णभेदेन यजुष एकपञ्चाशत्॥तत्र शुक्लयजुष एकोनविंशतिः॥कृष्णयजुषो द्वात्रिंशत् ॥ साम्नः षोडश ॥ अथर्वणस्यैकत्रिंशत् ॥ आहत्याष्टोत्तरशतम्॥(अथैषां पूर्वाचार्यप्रकाशितत्वं दर्शयति) तत्र गौडपादाचार्यैर्माण्डूक्योपनिषद्व्याख्याता ॥ श्रीमच्छंकरभगवत्पादाचार्यैर्दशोपनिषदः॥पञ्चरुद्रनृसिंहतापनी च शंकरानन्दैः ॥ सदाशिवब्रह्मेन्द्रैःस्वयंप्रकाशानन्दाद्यैश्च द्वात्रिंशोपनिषदः॥ विद्यारण्याचार्यैरष्टोत्तरशतोपनिषदो व्याख्याताः ॥ ( महावाक्यरत्नावल्याख्यायिकायास्त्रयोदशधाविभागं दर्शयति ) प्रकृते तु ॥ रामचन्द्रेणोपदिष्टे रामदूताय धीमते ॥ ईशाद्यष्टोत्तरशतोपनिषद्वादसांपत्तौ॥निमज्यात्र महावाक्यरत्नावलिरुदाहृता॥ विभाव्यते विभागेन सा त्रयोदशधा पुनः॥ तत्रादौ विधिवाक्यानि

बन्धमोक्षपराणि च ॥ अविद्वद्ध्येयवाक्यानि जगन्मिथ्यापराणि च ॥ तथोपदेशवाक्यानि जीवेशैक्यपराणि च ॥ ब्रह्मविन्मननाख्यानि जीवन्मुक्तिपराणि च ॥ ब्रह्मानुभूतिरूपाणि तत्समाधिपराणि च ॥ अष्टस्वरूपवाक्यानि फलवाक्यान्यनन्तरम् ॥ विदेहमुक्तिवाक्यानि लिख्यन्तेऽन्विष्य तत्क्रमात्॥ (महावाक्यरत्नावल्यां यथोक्ताधिकारिणं दर्शयति)यःस्वाश्रमाचाररतः परिव्राड्विजितेन्द्रियः ॥ सोऽधिकारी महावाक्यरत्नावल्यां न चापरः ॥ वाक्पूर्णसहनाप्यायं भद्रंकर्णेभिरेव च ॥ पञ्चशान्तीः पठित्वादौ पठेद्वाक्यान्यनन्तरम् ॥ तंत्र[1]

## सार्धान्तिकविधिवाक्यानि ।

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपा-

---

१ काशीमुद्रितपुस्तकेऽत्रैव पंच शान्तय उक्ताः परंत्वस्माभिरारंभे दत्ता इति पुनर्नात्र संगृहीताः ।

सीत ॥ आत्मानमेवावेदहं ब्रह्मास्मीति॥आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः॥ महत्पदं ज्ञात्वा वृक्षमूले वसेत्॥ सच्चिदानन्दात्मानमद्वितीयं ब्रह्म भावयेत् ॥ अहं ब्रह्मास्मीत्यनुसंधानं कुर्यात् ॥ स तज्ज्ञो बालोन्मत्तपिशाचवज्जडवृत्त्या लोकमाचरेत् ॥ ब्राह्मणः समाहितो भूत्वा तत्त्वंपदैक्यमेव सदा कुर्यात् ॥ सर्वत्राद्वैतब्रह्मबुद्धिं कुर्यात्॥ आशाम्बरो न नमस्कारो न स्वाहाकारो न स्वधाकारो न निन्दास्तुतिर्यादृच्छिको भवेत् ॥ १० ॥ सर्वतः स्वरूपमेव पश्यन् जीवन्मुक्तिमवाप्य प्रारब्धप्रतिभासनाशपर्यन्तं स्वरूपानुसंधानेन वसेत् ॥ स्वरूपानुसंधानं विनान्यथाचारपरो न भवेत् ॥ वेदांतश्रवणं कुर्वन्योगं समारभेत आकुञ्चनेन कुण्डलिन्या कपाटमुद्घाट्य मोक्षद्वारं विभेदयेत् ॥ यच्छेद्वाङ्मनसी

प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ॥ ज्ञानमात्मनिम-हतिनियच्छेत्तद्यच्छेच्छान्तआत्मनि॥आत्मानं चेद्विजानीयादयमस्मीति पूरुषः॥ किमिच्छन्क-स्य कामाय शरीरमनुसंज्वरेत् ॥ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥ नानुध्याया-द्बहूञ्शब्दान्वाचोविग्लापनंहितत् ॥२०॥ यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ॥ अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ चित्त-मेव हि संसारस्तत्प्रयत्नेन शोधयेत् ॥ दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ॥ मा-याकार्यमिदं भेदमस्ति चेद्ब्रह्मभावनम् ॥ देहो-ऽहमिति दुःखं चेद्ब्रह्माहमिति निश्चयः ॥ हृदय-ग्रन्थिरस्तित्वे छेदने ब्रह्मचक्रकम् ॥ संशये स-मनुप्राप्ते ब्रह्मनिश्चयमाप्नुयात् ॥ विज्ञेयोऽक्ष-रतन्मात्रं जीवितं चापि चञ्चलम् ॥ विहाय शास्त्रजालानि यत्सत्यं तदुपास्यताम् ॥ ३० ॥

यस्य स्त्री तस्य भोगेच्छा निस्त्रीकस्य क्व भोगभूः ॥ स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ चित्तं कारणमर्थानां तस्मिन्सति जगत्त्रयम् ॥ तस्मिन्क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम् ॥ गच्छंस्तिष्ठन्नुपविशंश्छयानो वान्यथापि वा ॥ यथेच्छया वसेद्विद्वानात्मारामः सदा मुनिः ॥ ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः ॥ आत्मानमात्मनः साक्षाद्ब्रह्म बुद्ध्वा सुनिश्चलम् ॥ देहजात्यादिसंबन्धान्वर्णाश्रमसमन्वितान् ।४०। वेदशास्त्रपुराणानि पदपांसुमिव त्यजेत् ॥ एकाकी निःस्पृहस्तिष्ठेन्न हि केन सहालपेत् ॥ उद्यन्नारायणेत्येवं प्रतिवाक्यं सदा यतिः ॥ मुनिः कौपीनवासाः स्यान्नग्नो वा ध्यानतत्परः॥ अध्यात्मरतिरासीनो निरपेक्षो निराशिषः ॥

आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ॥ अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥ यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ॥ यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत् ॥५०॥ लभते नासया यद्यत्तत्तदात्मेति भावयेत् ॥ जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ॥ त्वचा यद्यत्स्पृशेद्योगी तत्तदात्मेति भावयेत् ॥ दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ॥ द्रष्टृदर्शनदृश्यानां विरामो यत्र वा भवेत् ॥ दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकनी ॥ देवाभ्यगारे तरुमूले गुहायां वसेदसङ्गोऽलक्षितशीलवृत्तः ॥ निरिन्धनज्योतिरिवोपशान्तो न चोद्विजेदुद्विजेद्यत्रकुत्र ॥ शान्तो दान्त उपरतस्तितिक्षुर्योऽनूचानो ह्यभिजज्ञौ समानः ॥ त्यक्तेषणो ह्यनृणस्तं विदित्वा मौनी वसेदाश्रमे यत्र

कुत्र ॥ ६० ॥ यमैश्च नियमैश्चैव ह्यासनैश्च सुसंयुतः ॥ नाडीशुद्धिं च कृत्वादौ प्राणायामं समाचरेत् ॥ सर्वचिन्तां परित्यज्य सावधानेन चेतसा ॥ निर्विकल्पः प्रसन्नात्मा प्राणायामं समाचरेत् ॥ मरुदभ्यसनं सर्वं मनोयुक्तं समभ्यसेत् ॥ इतरत्र न कर्तव्या मनोवृत्तिर्मनीषिणा ॥ सार्धान्तिकविधिवाक्यानि षट्षष्टिः ६६

इति प्रथमं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकबन्धमोक्षवाक्यानि ।

देहादीनात्मत्वेनाभिमन्यते सोऽभिमान आत्मनो बन्धः ॥ तन्निवृत्तिर्मोक्षः ॥ देवमनुष्याद्युपासनाकामसंकल्पो बन्धः ॥ कर्तृत्वाद्यहंकारसंकल्पो बन्धः ॥ अणिमाद्यष्टैश्वर्याशासिद्धसंकल्पो बन्धः ॥ यमाद्यष्टाङ्गयोगसंकल्पो बन्धः ॥ केवलं मोक्षापेक्षाकामसंकल्पो बन्धः ॥

संकल्पमात्रसंभवोबन्धः ॥ नित्यानित्यवस्तुविचारादनित्यसंसारसुखदुःखविषयसमस्तक्षेत्रममताबन्धक्षयो मोक्षः ॥ मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥ १० ॥ बन्धनं विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ ममेति बध्यते जन्तुर्नममेति विमुच्यते ॥ ममत्वेन भवेज्जीवो निर्ममत्वेन केवलः ॥ स्वसंकल्पवशाद्बद्धो निःसंकल्पाद्विमुच्यते ॥ द्रष्टा दृश्यवशाद्बद्धो दृश्याभावे विमुच्यते ॥ इच्छामात्रमविद्येयं तन्नाशो मोक्ष उच्यते ॥ भोगेच्छामात्रकं बन्धस्तत्त्यागो मोक्ष उच्यते ॥ चित्तचैत्यकलना बन्धस्तन्मुक्तिर्मुक्तिरुच्यते ॥ अनास्थैव हि निर्वाणं दुःखमास्थापरिग्रहः ॥ कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ॥२०॥ स्वरूपावस्थितिर्मुक्तिस्तद्भ्रंशोऽहंत्ववेदनम् ॥ चित्ते चलति संसारो निश्चले मोक्ष उच्यते ॥

बन्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः ॥ पदार्थभावनादार्ढ्यं बन्ध इत्यभिधीयते ॥ वासनातानवं ब्रह्म मोक्ष इत्यभिधीयते ॥ न मोक्षो नभसः पृष्ठे न पाताले न भूतले ॥ सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ॥ मोक्षो मेऽस्त्विति चिन्तान्तर्जाता चेदुत्थितं मनः ॥ मननोत्थे मनस्येष बन्धः सांसारिको मतः ॥ तदमार्जनमात्रं हि महासंसारतां गतम् ॥ तत्प्रमार्जनमात्रं तु मोक्ष इत्यभिधीयते ॥ इति सार्धान्तिकबन्धमोक्षवाक्यान्येकत्रिंशत् ॥३१॥

द्वितीयं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकाविद्वन्निन्दावाक्यानि ।

अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योहमस्मीति न स वेद यथा पशुः ॥ अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति ॥ कर्तृत्वाद्यहंकारभावना-

रूढो मूढः ॥ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥ अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते ॥ प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत् ॥ अष्टाङ्गं च चतुष्पादं त्रिस्थानं पञ्चदैवतम् ॥ ॐकारं यो न जानाति ब्राह्मणो न भवेत्तु सः ॥ अतिवर्णाश्रमं रूपं सच्चिदानन्दलक्षणम् ॥ यो न जानाति सोऽविद्वान्कदा मुक्तो भविष्यति ॥ १० ॥ कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः ॥ तेऽप्यज्ञानतया नूनं पुनरायान्ति यान्ति च ॥ काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ॥ स्वायत्तमेकान्तहितं स्वेप्सितत्यागवेदनम् ॥ यस्य दुष्करतां यातं धिक्तं पुरुषकीटकम्॥ अद्वितीयब्रह्मतत्त्वं न जानन्ति यदा तदा ॥ भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥ अज्ञानोपहतो बाल्ये यौवने वनिताहतः ॥

शेषे कलत्रचिन्तार्तः किं करोति नराधमः ॥
इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः ॥२०॥
धराविवरमग्नानां कीटानां समतां गताः ॥
इति सार्थान्तिकाविद्वन्निन्दावाक्यानि ॥ २१॥

तृतीयं प्रकरणं समाप्तम् ।

---

## सार्थान्तिकजगन्मिथ्यावाक्यानि ।

नान्यत्किंचन मिषत् ॥ वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ अतोऽन्यदार्तम् ॥ नतु तद्द्वितीयमस्ति ॥ नात्र काचन भिदास्ति नैव तत्र काचन भिदास्ति ॥ सर्वं विकारजातं मायामात्रम् ॥ सर्वत्र नह्यस्ति द्वैतसिद्धिः ॥ नास्ति द्वैतं कुतो मर्त्यम् ॥ प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ॥ मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १० ॥ विकल्पो विनि-

वर्तेत कल्पितो यदि केनचित् ।। उपदेशा-
दयं वादो ज्ञाते द्वैतं न विद्यते ।। द्वितीयकार-
णाभावादनुत्पन्नमिदं जगत् ।। यथैवेदं नभः
शून्यं जगच्छून्यं तथैव हि ।। इदं प्रपञ्चं य-
त्किंचिद्यद्यज्जगति वीक्ष्यते ।। दृश्यरूपं च दृग्रूपं
सर्वं शशविषाणवत् ।। इदं प्रपञ्चं नास्त्येव नो-
त्पन्नं नो स्थितं जगत् ।। चित्तं प्रपञ्चमित्याहुर्ना-
स्ति नास्त्येव सर्वदा ।। मायाकार्यादिकं नास्ति
माया नास्ति भयं नहि ।। परं ब्रह्माहमस्मीति
स्मरणस्य मनो नहि ।। २० ।। वन्ध्याकुमारव-
चने भीतिश्चेदस्त्विदं जगत् ।। शशशृङ्गेण ना-
गेन्द्रो मृतश्चेज्जगदस्ति सत् ।। मृगतृष्णाजलं
पीत्वा तृप्तश्चेदस्त्विदं जगत् ।। गंन्धर्वनगरे सत्ये
जगद्भवति सर्वदा ।। गगने नीलिमासत्ये ज-
गत्सत्यं भविष्यति ।। मासात्पूर्वं मृतो मर्त्यो
ह्यागतश्चेज्जगद्भवेत् ।। गोस्तनादुद्भवत्क्षीरपु-

नरारोपणे जगत् ॥ ज्वालाग्निमण्डले पद्मवृद्धि-श्चेदस्त्विदं जगत् ॥ ज्ञानिनो हृदयं मूढैर्ज्ञातं चेदस्त्विदं जगत् ॥ अजकुक्षौ जगन्नास्ति ह्यात्मकुक्षौ जगन्नहि ॥ ३० ॥ सर्वदा भेदकलनं द्वैताद्वैतं न विद्यते ॥ नास्ति नास्ति जगत्सर्वं गुरुशिष्यादिकं न हि ॥ सच्चिदानन्दमात्रो-ऽहमनुत्पन्नमिदं जगत् ॥ ॥ इति जगन्मिथ्या-वाक्यानि त्रयस्त्रिंशत् ॥ ३३ ॥

चतुर्थं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकोपदेशवाक्यानि ।

स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ॥ अभयं वै ज-नक प्राप्तोऽसि ॥ ब्रह्मचर्यमहिंसां चापरिग्रहं च सत्यं च यत्नेन हेरक्षतो हेरक्षतो हेरक्षत इति ॥

तत्त्वमसि त्वं तदसि ॥ यन्मनसा न मनुते ये-
नाहुर्मनो मतम् ॥ तदेव ब्रह्म त्वं विद्धि
नेदं यदिदमुपासते ॥ यत्परं ब्रह्म सर्वात्मा
विश्वस्यायतनं महत् ॥ सूक्ष्मात्सूक्ष्मतरं नित्यं
तत्त्वमेव त्वमेव तत् ॥ अन्तःपूर्णो बहिः पूर्णः
पूर्णकुम्भ इवार्णवे ॥ अन्तःशून्यो बहिःशून्यः
शून्यकुम्भ इवाम्बरे ॥१०॥ मा भव ग्राह्यभा-
वात्मा ग्राहकात्मा च मा भव ॥ भावनामखि-
लां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ द्रष्टृदर्शन-
दृश्यादि त्यक्त्वा वासनया सह ॥ दर्शनप्रथमा-
भासमात्मानं केवलं भज ॥ चित्ताकाशं चिदा-
काशमाकाशं च तृतीयकम् ॥ द्वाभ्यां शून्य-
तरं विद्धि चिदाकाशं महामुने ॥ ध्यानतो
हृदयाकाशे चिति चिच्चक्रधारया ॥ मनो मारय
निःशङ्कं त्वां प्रबध्नन्ति नारयः ॥ भोगैकवा-
सनां त्यक्त्वा त्यज त्वं भेदवासनाम् ॥ भावा-

भावौ ततस्त्यक्त्वा निर्विकल्पः स्थिरो भव ॥ २० ॥ त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ॥ उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥ आत्मन्यतीते सर्वस्मात्सर्वरूपेऽथवा तते ॥ को बन्धः कश्च वा मोक्षो निर्मूलं मननं कुरु ॥ आशा यातु निराशात्वमभावं यातु भावना ॥ अमनस्त्वं मनो यातु तवासङ्गेन जीवतः ॥ एकमाद्यन्तरहितं चिन्मात्रमलं ततम् ॥ खादप्यतितरां सूक्ष्मं तद्ब्रह्मासि न संशयः ॥ रक्षको विष्णुरित्यादि ब्रह्मा सृष्टेस्तु कारणम् ॥ संहारे रुद्र इत्येवं सर्वं मिथ्येतिनिश्चिनु ॥ ३० ॥ मत्त्यक्तं नास्ति किंचिद्वा मत्त्यक्ता पृथिवी तु वा ॥ मयातिरिक्तं यद्यद्वा तत्तन्नास्तीति निश्चिनु ॥ अनात्मेति प्रसङ्गो वा अनात्मेति मनोऽपि वा ॥ अनात्मेति जगद्वापि नास्त्यनात्मेति निश्चिनु ॥

आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ॥ तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवानघ ॥ निद्राया लोकवार्तायाः शब्दादेरात्मविस्मृतेः ॥ क्वचिन्नावसरं दत्वा चिन्तयात्मानमात्मनि ॥ सर्वव्यापारमुत्सृज्य अहं ब्रह्मेति भावय ॥ अहं ब्रह्मेति निश्चित्य त्वहं भावं परित्यज ॥ ४० ॥ घटाकाशं महाकाश इवात्मानं परात्मनि ॥ विलाप्याखण्डभावेन तूष्णीं भव सदा मुने ॥ चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च ॥ चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ सत्यचिद्घनमखण्डमद्वयं सर्वदृश्यरहितं निरामयम् ॥ यत्पदं विमलमद्वयं शिवं तत्सदाहमिति मौनमाश्रय ॥ जन्ममृत्युसुखदुःखवर्जितं जातिनीतिकुलगोत्रदूरगम् ॥ चिद्विवर्तजगतोऽस्य कारणं तत्सदाहमिति मौनमाश्रय ॥ पूर्णमद्वयमखण्डचेतनं

विश्वभेदकलनादिवर्जितम् ॥ अद्वितीयपरसं-
विदात्मकं तत्सदाहमिति मौनमाश्रय ॥ ५० ॥
स्वात्मनोऽन्यतया भातं चराचरमिदं जगत् ॥
स्वात्ममात्रतया बुद्धा तदस्मीति विभावय ॥
विलाप्य विकृतिं कृत्स्नां संभवव्यत्ययक्रमात् ॥
परिशिष्टं च चिन्मात्रं चिदानन्दं विचिन्तय
॥ इति सार्धान्तिकोपदेशवाक्यानि चतुः-
पञ्चाशत् ॥ ५४ ॥

पञ्चमं प्रकरणं समाप्तम् ॥

---

## सार्धान्तिकजीवब्रह्मैक्यवाक्यानि ।

स यश्चायं पुरुषे ॥ यश्चासावादित्ये ॥ स
एकः ॥ सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न
विचिकित्स्यम् ॥ त्वं ब्रह्मासि ॥ अहं ब्रह्मा-
स्मि ॥ आवयोरन्तरं न विद्यते त्वमेवाहमहमेव

त्वम् ॥ गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ॥ कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥ येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ॥ १० ॥ स्वा-द्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥ चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ॥ चैत-न्यमेकं ब्रह्मान्तः प्रज्ञानं ब्रह्म मय्यपि ॥ परि-पूर्णः परात्मास्मिन्देहे विद्याधिकारिणि ॥ बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते । स्वतः पूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः ॥ अस्मी-त्यैक्यपरामर्शात्तेन ब्रह्म भवाम्यहम् ॥ एक-मेवाद्वितीयं सन्नामरूपविवर्जितम् ॥ सृष्टेः पुराधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥ श्रोतु-र्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम् ॥ २० ॥ एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥ स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ॥

अहंकारादिदेहान्तात्प्रत्यगात्मेति गीयते ॥
दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीयते ॥ ब्र-
ह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ मा-
याविद्ये विहायैव उपाधी परजीवयोः ॥
अखण्डं सच्चिदानन्दं परं ब्रह्म विलक्ष्यते ॥
हकारः खेचरी प्रोक्तस्त्वंपदं चेति निश्चितम् ॥
सकारः परमेशः स्यात्तत्पदं चेति निश्चितम् ॥
सकारो ध्यायते जन्तुर्हकारो हि भवेद्ध्रुवम्॥३०॥
आद्यो रा तत्पदार्थः स्यान्मकारस्त्वंपदार्थवान्।
तयोः संयोजनमसीत्यर्थे तत्त्वविदो विदुः ॥
नमस्त्वमर्थो विज्ञेयो रामस्तत्पदमुच्यते ॥ अ-
सीत्यर्थे चतुर्थी स्यादेवं मन्त्रेषु योजयेत् ॥ क्षीरं
क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ॥ संयु-
क्तमेकतां याति तथात्मन्यात्मविन्मुनिः ॥ घटे
नष्टे यथा व्योम व्योमैव भवति स्वयम् ॥
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥

इति सार्धान्तिकजीवब्रह्मैक्यवाक्यान्यष्टत्रिंशत् ॥ ३८ ॥

षष्ठं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकमननवाक्यानि ।

अहमन्नमहमन्नमहमन्नम् ॥ अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः ॥ अहं मनुरभवं सूर्यश्च अहमेवेदं सर्वमसानि ॥ यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ॥ समुद्रे लीयते तद्वज्जगन्मय्यनुलीयते ॥ अनात्मदृष्टेरविवेकनिद्रामहंममस्वप्नगतिं गतोऽहम् ॥ स्वरूपसूर्येऽभ्युदिते स्फुटोक्तैर्गुरोर्महावाक्यपदैः प्रबुद्धः ॥ प्राणाश्चलन्तु तद्धर्मैः कामैर्वा हन्यतां मनः ॥ आनन्दबुद्धिपूर्णस्य मम दुःखं कथं भवेत् ॥१०॥ न मे बन्धो न मे मुक्तिर्न मे शास्त्रं न मे गुरुः ॥

मायामात्रविकासत्वान्मायातीतोऽहमद्वयः ॥
आत्मानमञ्जसा वेद्मि क्वाप्यज्ञानं पलायितम्॥
कर्तृत्वमपि मे नष्टं कर्तव्यं वापि न क्वचित् ॥
ब्राह्मण्यं कुलगोत्रे च नामसौन्दर्यजातयः॥ सर्वे
स्थूलगता ह्येते स्थूलाद्भिन्नस्य मे नहि॥ क्षु-
त्पिपासान्ध्यबाधिर्यकामक्रोधादयोऽखिलाः ॥
लिङ्गदेहगता ह्येते ह्यलिङ्गस्य न विद्यते ॥ ज-
डत्वप्रियमोदत्वधर्माः कारणदेहगाः ॥ न
सन्ति मम नित्यस्य निर्विकारस्वरूपिणः
॥ २० ॥ चिद्रूपत्वान्न मे जाड्यं सत्यत्वान्ना-
नृतं मम ॥ आनन्दत्वान्न मे दुःखमज्ञाना-
द्भाति सत्यवत् ॥ नाहं देहो जन्ममृत्यू कुतो
मे नाहं प्राणः क्षुत्पिपासे कुतो मे ॥ नाहं
चेतः शोकमोहौ कुतो मे नाहं कर्ता बन्ध-
मोक्षौ कुतो मे॥ आनन्दमन्तर्निजमाश्रयन्त-
माशापिशाचीमवमानयन्तम् ॥ आलोकयन्तं

जगदिन्द्रजालभापत्कथं मां प्रविशेदसङ्गम् ॥ देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ॥ तारं जपतु वाक्तद्वत्पठत्वाम्नायमस्तकम् ॥ विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ॥ साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये॥३०॥ ज्ञातं ज्ञातव्यमधुना दृष्टं द्रष्टव्यमद्भुतम्॥ विश्रान्तोऽस्मि चिरं श्रान्तश्चिन्मात्रान्नास्ति किंचन॥ न भूतं न भविष्यं च चिन्तयामि कदाचन॥ न स्तौमि न च निन्दामि ह्यात्मनोऽन्यन्नहि क्वचित् ॥ अलेपकोऽहमजरो नीरागः शान्तवासनः ॥ स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ॥ न सन्ति नास्ति माया च तेभ्यश्चाहं विलक्षणः ॥ किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ॥ यन्मया पूरितं विश्वं महाकल्पाम्बुना यथा ॥ इति सार्धा-

न्तिकमननवाक्यान्येकोनचत्वारिंशत् ॥३९॥

सप्तमं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकजीवन्मुक्तिवाक्यानि ।

स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरम् ॥ स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति ॥ ते देवाः पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च ससाधनेभ्यो व्युत्थाय निरागारा निष्परिग्रहा अशिखा अयज्ञोपवीता अन्धा बधिरा मुग्धाः क्लीबा मूका उन्मत्ता इव परिवर्तमानाः शान्ता दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतय आत्मक्रीडा आत्ममि-

थुना आत्मानन्दाः प्रणवमेव परं ब्रह्मात्मप्रकाशं शून्यं जानन्तस्तत्रैव परिसमाप्ताः ॥ कुचेलोऽसहाय एकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो जीर्णकामो हस्तिनि सिंहे दंशे मशके नकुले सर्पराक्षसगन्धर्वे मृत्यो रूपाणि विदित्वा न बिभेति कुतश्चनेति ॥ सर्वधर्मान्परित्यज्य निर्ममो निरहङ्कारो भूत्वा ब्रह्मिष्ठं शरणमुपगम्य तत्वमसि सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचनेत्यादिमहावाक्यार्थानुभवज्ञानाद्ब्रह्मैवाहमस्मीति निश्चित्य निर्विकल्पकसमाधिना स्वतन्त्रो यतिश्चरति स संन्यासी स मुक्तः स पूज्यः स योगी स परमहंसः सोऽवधूतः स ब्राह्मण इति जीवः पञ्चविंशकः स्वकल्पितचतुर्विंशतितत्वं परित्यज्य षड्विंशकपरमात्माहमितिनिश्चयाज्जीवन्मुक्तो भवति ॥ तुरीयमक्षरमिति

ज्ञात्वा जागरिते सुषुप्त्यवस्थापन्न इव यद्यच्छ्रुतं यद्यद्दृष्टं तत्सर्वमविज्ञातमिव यो वसेत्तस्य स्वप्नावस्थायामपि तादृगवस्था भवति स जीवन्मुक्तो भवति ॥ सकृद्विभातसदानन्दानुभवैकगोचरो ब्रह्मविद्विद्वांश्चक्षुरादिबाह्यप्रपञ्चोपरतः सर्वं जगदात्मत्वेन पश्यन्नात्मेति भावयन्कृतकृत्यो भवति ॥ निर्द्वन्द्वः सदाऽचञ्चलगात्रः परमशान्तिं स्वीकृत्य नित्यशुद्धः परमात्माहमेवेत्यखण्डानन्दः पूर्णः कृतार्थः परिपूर्णपरमाकाशमग्नमनाः प्राप्तोन्मन्यवस्थः संन्यस्तसर्वेन्द्रियवर्गोऽनेकजन्मार्जितपुण्यपुञ्जपरिपक्वकैवल्यफलोऽखण्डानन्दनिरस्तसर्वक्लेशकश्मलो ब्रह्माहमस्मीति कृतकृत्यो भवति॥ब्रह्मैवाहमस्मीत्यनवरतं ब्रह्मप्रणवानुसंधानेन यः कृतकृत्यो भवति स परमहंसपरिव्राट्॥१०॥भावाभावकलाविनिर्मुक्तः सर्वसंशयध्वस्तः पूर्णा-

हंभावः कृतकृत्यो भवति ॥ प्राणो ह्येष सर्व-भूतैर्विभाति विजानन्विद्वान्भवते नातिवादी ॥ आत्मक्रीडा आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः निमिषार्धं न तिष्ठन्ति वृत्तिं ब्रह्म-मयीं विना ॥ यथा तिष्ठन्ति ब्रह्माद्याः सन-काद्याः शुकादयः ॥ अध्यात्मरतिरासीनो निरपेक्षो निराशिषः ॥ सर्वद्वन्द्वैर्विनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥ कपालं वृक्षमूलानि कु-चेलान्यसहायता ॥ समता चैव सर्वस्मिन्ने-तन्मुक्तस्य लक्षणम् ॥ स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः ॥ २० ॥ ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ॥ निर्मान-श्चानहंकारो निर्द्वन्द्वश्छिन्नसंशयः ॥ आत्मक्रीड आत्मरतिरात्मवान् समदर्शनः ॥ स्मृत्वा स्पृष्ट्वा च भुक्त्वा च दृष्ट्वा ज्ञात्वा शुभाशुभम् ॥ न हृष्यति ग्लायति यः स शान्त इति कथ्यते ॥

अप्राप्तं हि परित्यज्य संप्राप्ते समतां गतः ॥
अदृष्टखेदाखेदो यः संतुष्ट इति कथ्यते ॥
नाकृतेन कृतेनार्थो न श्रुतिस्मृतिविभ्रमैः ॥
निर्मन्थन इवाम्भोधिः स तिष्ठति यथास्थितः ॥ सम्यग्ज्ञानाववोधेन नित्यमेकसमाधिना
॥ ३० ॥ सांख्य एवाववुद्धा ये ते सांख्या योगिनः स्मृताः ॥ प्राणाद्यनिलसंशान्तौ
युक्त्या ये पदमागताः ॥ अनामयमनाद्यन्तं
ते स्मृता योगयोगिनः ॥ सुखदुःखदशाधीरं
साम्यान्न प्रोद्धरन्ति यम् ॥ निःश्वासा इव शैलेन्द्रं चित्तं तस्य मृतं विदुः ॥ वाचामतीतविषयो विषयाशादशोज्झितः ॥ परानन्दरसाक्षुब्धो रमते स्वात्मनात्मनि ॥ निर्ग्रन्थिः
शान्तसंदेहो जीवन्मुक्तोऽविभावनः ॥ अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थितः ॥
निर्धनोऽपि सदा तुष्टोऽप्यसहायो महाबलः

॥ ४० ॥ नित्यतृप्तोऽप्यभुञ्जानोऽप्यसमः समदर्शनः ॥ कुर्वन्नपि न कुर्वाणश्चाभोक्ता फलभोग्यपि ॥ शरीर्यप्यशरीरोऽसौ परिच्छिन्नोऽपि सर्वगः ॥ अध्यात्मरतिरासीनः पूर्णः पावनमानसः ॥ नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ॥ न समाधानजाप्याभ्यां यस्य निर्वासनं मनः ॥ जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ॥ न तत्पश्यति चिद्रूपं ब्रह्म वस्त्वेव पश्यति ॥ अहमन्नं सदान्नाद इति हि ब्रह्मवेदनम् ॥ ब्रह्मविद्ग्रसति ज्ञानात्सर्वं ब्रह्मात्मनैव तु ॥ ५० ॥ समाधिमथ कर्माणि मा करोतु करोतु वा ॥ हृदयेनात्तसर्वेहो मुक्त एवोत्तमाशयः ॥ अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात् ॥ तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥ यो विलङ्घ्याश्रमान्वर्णानात्मन्येव स्थितः पुमान् ॥ अति-

वर्णाश्रमी योगी ह्यवधूतः स कथ्यते ॥ यथा रविः सर्वरसान्प्रभुङ्क्ते हुताशनश्चापि हि सर्वभक्षः ॥ तथैव योगी विषयान्प्रभुङ्क्ते न लिप्यते पुण्यपापैश्च शुद्धः ॥ केवलं सुसमः स्वच्छो मौनी मुदितमानसः ॥ संतोषामृतपानेन ये शान्तास्तृप्तिमागताः॥६०॥आत्मारामा महात्मानस्ते महापदमागताः ॥ हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः॥ न हृष्यति ग्लायति यः स जीवन्मुक्त उच्यते ॥ अहंकारमयीं त्यक्त्वा वासनां लीलयैव यः ॥ तिष्ठति ध्येयसंत्यागी स जीवन्मुक्त उच्यते ॥ मौनवान्निरहंभावो निर्मानो मुक्तमत्सरः ॥ यः करोति गतोद्वेगः स जीवन्मुक्त उच्यते ॥ यावती दृश्यकलना सकलेयं विलोक्यते ॥ सा येन सुष्ठु संत्यक्ता स जीवन्मुक्त उच्यते ॥ उद्वेगानन्दरहितः समया स्वच्छया धिया ७०॥

न शोचते न चोदेति स जीवन्मुक्त उच्यते ॥
सर्वेच्छाः सकलाः शङ्काः सर्वेहाः सर्वनिश्चयाः॥
धिया येन परित्यक्ताः स जीवन्मुक्त उच्यते॥
जन्मस्थितिविनाशेषु सोदयास्तमयेषु च ॥
सममेव मनो यस्य स जीवन्मुक्त उच्यते ॥
सर्वाधिष्ठानचिन्मात्रे निर्विकल्पे चिदात्मनि॥
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ॥
क्रियानाशाद्भवेच्चिन्ता नाशोऽस्माद्वासना-क्षयः ॥ वासनाप्रक्षयो मोक्षः स जीवन्मुक्त उच्यते ॥ निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते ॥ ८० ॥ सा सर्वदा भवेद्यस्य स जीवन्मुक्त उच्यते ॥ देहेन्द्रियेष्वहंभाव इदंभावस्तदन्यके ॥ यस्य नो भवतः क्वापि स जीवन्मुक्त उच्यते ॥ न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः ॥ प्रज्ञया यो विजानाति स जीवन्मुक्त उच्यते ॥ साधुभिः पूज्यमा-

नोऽपि पीड्यमानोऽपि दुर्जनैः ॥ सममेव भवेद्यस्य स जीवन्मुक्त उच्यते ॥ यथास्थितमिदं यस्य व्यवहारवतोऽपि च ॥ अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ नोदेति नास्तमायाति सुखे दुःखे मनःप्रभा ॥ ९० ॥ यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ॥ यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ रागद्वेषभयादीनामनुरूपं चरन्नपि ॥ योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥ यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥ कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥ हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ यः समस्तार्थजालेषु व्यवहार्यपि शीतलः ॥ परार्थेष्विव पूर्णात्मा स

जीवन्मुक्त उच्यते ॥ १०० ॥ प्रजहाति यदा कामान्सर्वांश्चित्तगतान्मुने ॥ मयि सर्वात्मके तुष्टः स जीवन्मुक्त उच्यते ॥ चैत्यवर्जित-चिन्मात्रे पदे परमपावने ॥ अक्षुब्धचित्तो विश्रान्तः स जीवन्मुक्त उच्यते ॥ इदं जग-दयं सोऽयं दृश्यजातमवास्तवम् ॥ यस्य चित्ते न स्फुरति स जीवन्मुक्त उच्यते ॥ शान्तसंसारकलनः कलावानपि निष्कलः ॥ यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उ-च्यते ॥ चिदात्माहं परात्माहं निर्गुणोऽहं परात्परः ॥ ११० ॥ आत्ममात्रेण यस्तिष्ठेत्स जीवन्मुक्त उच्यते ॥ देहत्रयातिरिक्तोऽहं शुद्धचैतन्यमस्म्यहम् ॥ ब्रह्माहमिति यस्यान्तः स जीवन्मुक्त उच्यते ॥ यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः ॥ परमानन्द-पूर्णो यः स जीवन्मुक्त उच्यते ॥ नित्या-

नन्दः प्रसन्नात्मा ह्यन्यचिन्ताविवर्जितः ॥ किंचिदस्तित्वहीनो यः स जीवन्मुक्त उच्यते ॥ अहं ब्रह्मास्म्यहं ब्रह्मास्म्यहं ब्रह्मेति निश्चयः ॥ चिदहं चिदहं चेति स जीवन्मुक्त उच्यते ॥ इति जीवन्मुक्तिवाक्यान्येकोनविंशदधिकं शतम् ॥ ११९ ॥

अष्टमं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकस्वानुभूतिवाक्यानि ।

यो सावसौ पुरुषः सोऽहमस्मि ॥ तद्योऽहं सोऽसौ योऽसौ सोऽहम् ॥ तं शान्तमचलमद्वयानन्दचिद्घन एवास्मि ॥ तत्पूर्णानन्दैकबोधस्तद्ब्रह्मैवाहमस्मि ॥ त्वं वाहमस्मि भगवो देव तेऽहं वै त्वमसि ॥ सच्चिदानन्दात्मकोऽहमजोऽहं परिपूर्णोऽहमस्मि ॥ शुद्धाद्वैतब्र-

ह्माहम् ॥ वाचामगोचरनिराकारपरब्रह्मस्व-
रूपोऽहमेव ॥ सदोज्ज्वलोऽविद्यातत्कार्यहीनः
स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः
सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमो-
होऽहमेवाहमों तद्यत्परं ब्रह्म रामचन्द्रश्चिदा-
त्मकः सोऽहमों तद्रामभद्रः परं ज्योती रसोऽ-
हमोम् ॥ तत्परः परमपुरुषः पुराणपुरुषोत्तमो
नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दानन्ताद्वयप-
रिपूर्णः परमात्मा ब्रह्मैवाहं रामोऽस्मि ॥१०॥
त्रिषु धामसु यद्भोज्यं भोक्ता भोगश्च यद्भवेत्॥
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदा-
शिवः ॥ मय्येव सकलं जातं मयि सर्वं
प्रतिष्ठितम् ॥ मयि सर्वं लयं याति तद्ब्रह्माद्व-
यमस्म्यहम् ॥ निर्वाणोऽस्मि निरीहोऽस्मि
निरंशोऽस्मि निरीप्सितः ॥ चिदात्माऽस्मि
निरंशोऽस्मि परापरविवर्जितः ॥ ब्रह्मैवाहं

सर्ववेदांतवेद्यं नाहं वेद्यं व्योमवातादिरूपम् ॥ रूपं नाहं नाम नाहं न कर्म ब्रह्मैवाहं सच्चिदानन्दरूपम् ॥ नित्यः शुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः सन्विभुश्चाद्वितीयः ॥ आनन्दाब्धिर्यत्परः सोऽहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ २० ॥ सोऽहमर्कः परं ज्योतिरर्कज्योतिरहं शिवः ॥ आत्मज्योतिरहं शुक्रः सर्वज्योतिरसावहोम् ॥ द्वैतभावविमुक्तोऽसि सच्चिदानन्दलक्षणः ॥ शुद्धबोधस्वरूपोऽहं केवलोऽहं सदाशिवः ॥ निष्क्रियोऽस्म्यविकारोऽसि निर्गुणोऽसि निराकृतिः ॥ निर्विकल्पोऽसि नित्योऽसि निरालम्बोऽसि निर्द्वयः ॥ केवलाखण्डबोधोऽहं स्वानन्दोऽहं निरन्तरः ॥ सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥ केवलं चित्सदानन्दं ब्रह्मैवाहं जनार्दनः ॥ अशुभाशु-

भसंकल्पैः संशान्तोऽस्मि निरामयः ॥ ३० ॥
नष्टेष्टानिष्टकलनः संविन्मात्रपरोऽस्म्यहम् ॥
अन्तर्याम्यहमग्राह्योऽनिर्देश्योऽहमलक्षणः ॥
अद्वैतोऽहमपूर्णोऽहमग्राह्योऽहमनन्तरः ॥ अद्व-
यानन्दविज्ञानघनोऽस्म्यहमविक्रियः ॥ अवि-
द्याकार्यहीनोऽहमवाङ्मनसगोचरः ॥ आत्म-
चैतन्यरूपोऽहमहमानन्दचिद्घनः ॥ आप्तकामो-
ऽहमाकाशात्परमात्मेश्वरोऽस्म्यहम् ॥ चिदान-
न्दोऽस्म्यहं चेता चिद्घनश्चिन्मयोऽस्म्यहम् ॥
ज्योतिर्मयोऽस्म्यहं ज्यायाञ्ज्योतिषां ज्योति-
रस्म्यहम् ॥ नित्योऽहं निरवद्योऽहं निष्क्रि-
योऽस्मि निरञ्जनः ॥ ४० ॥ निर्मलो निर्वि-
कल्पोऽहं निराख्यातोऽस्मि निश्चलः ॥
निर्विकारो नित्यपूतो निर्गुणो निःस्पृहोऽस्म्य-
हम् ॥ निरिन्द्रियो नियन्ताहं निरपेक्षोऽस्मि
निष्कलः ॥ पुरुषः परमात्माहं पुराणः

परमोऽस्म्यहम् ॥ पूर्णानन्दैकबोधोऽहं प्रत्यगेकरसोऽस्म्यहम् ॥ प्रज्ञातोऽहं प्रशान्तोऽहं प्रकाशः परमेश्वरः ॥ एकधा चिन्त्यमानोऽहं द्वैताद्वैतविलक्षणः ॥ शुद्धोऽस्मि शुक्रः शान्तोऽस्मि शाश्वतोऽस्मि शिवोऽस्म्यहम् ॥ अहं सकृद्विभातोऽस्मि स्वे महिम्नि सदा स्थितः ॥ सच्चिदानन्दमात्रोऽहं स्वप्रकाशोऽस्मि चिद्घनः ॥ ५० ॥ मानावमानहीनोऽस्मि निर्गुणोस्मि शिवोऽस्म्यहम् ॥ द्वैताद्वैतविहीनोऽस्मि द्वन्द्वहीनोऽस्मि सोऽस्म्यहम् ॥ भावाभावविहीनोऽस्मि भाषाहीनोऽस्मि भास्म्यहम् ॥ शून्याशून्यविहीनोऽस्मि शोभनाशोभनोऽस्म्यहम् ॥ सदसद्भेदहीनोऽस्मि संकल्परहितोऽस्म्यहम् ॥ नानात्मभेदहीनोऽस्मि ह्यखण्डानन्दविग्रहः ॥ बन्धमोक्षविहीनोऽस्मि शुद्धं ब्रह्मास्मि सो-

ऽस्म्यहम् ॥ चित्तादिसर्वहीनोऽस्मि परमोऽस्मि परात्परः ॥ सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम् ॥ ध्यातृध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम् ॥ ६० ॥ लक्ष्यालक्ष्यविहीनोऽस्मि लयहीनरसोऽस्म्यहम् ॥ मातृमानविहीनोऽस्मि मेयहीनः शिवोऽस्म्यहम् ॥ सर्वेन्द्रियविहीनोऽस्मि सर्वकर्मकृदप्यहम् ॥ मुदितामुदिताख्योऽस्मि सर्वमौनफलोऽस्म्यहम् ॥ षड्विकारविहीनो ऽस्मि षट्कोशरहितोऽस्म्यहम् ॥ देशकालविमुक्तोऽस्मि दिगम्बरसुखोऽस्म्यहम् ॥ अखण्डाकाशरूपोऽस्मि ह्यखण्डाकारमस्म्यहम् ॥ प्रपञ्चमुक्तचित्तोऽस्मि प्रपञ्चरहितोऽस्म्यहम् ॥ सर्वप्रकाशरूपोऽस्मि चिन्मात्रज्योतिरस्म्यहम् ॥ कालत्रयविमुक्तोऽस्मि कामादिरहितोऽस्म्यहम् ॥ ७० ॥ मुक्तिहीनोसि मुक्तोऽस्मि

मोक्षहीनोस्म्यहं सदा ॥ गन्तव्यदेशहीनो-
ऽस्मि गमनादिविवर्जितः ॥ सर्वदा समरू-
पोस्मि शान्तोऽस्मि पुरुषोत्तमः ॥ चिदक्ष-
रोऽहं सत्योऽहं वासुदेवोऽजरोऽमरः ॥ अह-
मेवाक्षरं ब्रह्म वासुदेवाख्यमद्वयम् ॥ पर-
ब्रह्मस्वरूपोऽहं परमानन्दमस्म्यहम् ॥ केवलं
ज्ञानरूपोऽहं केवलं परमोऽस्म्यहम् ॥ केवलं
शान्तरूपोऽहं केवलं चिन्मयोऽस्म्यहम् ॥
केवलं नित्यरूपोऽहं केवलं शाश्वतोऽस्म्यहम्॥
केवलं सत्यरूपोऽहमहं त्यक्त्वाहमस्म्यहम्
॥ ८० ॥ केवलं तुर्यरूपोऽस्मि तुर्यातीतोऽस्मि
केवलः ॥ केवलाकाररूपोऽस्मि शुद्धरूपो-
ऽस्म्यहं सदा ॥ निर्विकल्पस्वरूपोऽस्मि नि-
रीहोऽस्मि निरामयः ॥ अपरिच्छिन्नरूपो-
ऽस्मि ह्यनन्तानन्दरूपवान् ॥ आत्मारामस्व-
रूपोऽस्मि ह्यहमात्मा सदाशिवः ॥ आदि-

मध्यान्तशून्योस्मि ह्याकाशसदृशोऽस्म्यहम् ॥ नित्यशुद्धचिदानन्दः सत्तामात्रोऽहमव्ययः ॥ नित्यबुद्धविशुद्धैकः सच्चिदानन्दमस्म्यहम् ॥ भूमानन्दस्वरूपोऽस्मि भाषाहीनोऽस्म्यहं सदा ॥ सर्वाधिष्ठानरूपोऽस्मि सर्वदा चिद्घनोऽस्म्यहम् ॥ ९० ॥ चित्तवृत्तिविहीनोऽहं चिदात्मैकरसोऽस्म्यहम् ॥ अहं ब्रह्मैव सर्वं स्यादहं चैतन्यमेव हि ॥ अहमेवाहमेवास्मि भूमाकारस्वरूपवान् ॥ अहमेव महानात्मा ह्यहमेव परात्परः ॥ अहमन्यवदाभामि ह्यहमेव शरीरवत् ॥ अहं शिष्यवदाभामि ह्यहं लोकत्रयाश्रयः ॥ अहं कालत्रयातीतो ह्यहं वेदैरुपासितः ॥ अहं शास्त्रेण निर्णीत अहं चित्ते व्यवस्थितः ॥ आनन्दघन एवाहमहं ब्रह्मास्मि केवलम् ॥ आत्मनात्मनि तृप्तोऽस्मि ह्यरूपो ह्यहमव्ययः ॥ १०० ॥ आका-

शादपि सूक्ष्मोऽहमाद्यन्ताभाववानहम् ॥ सत्ता-
मात्रस्वरूपोऽहं शुद्धमोक्षस्वरूपवान् ॥ सत्या-
नन्दस्वरूपोऽहं ज्ञानानन्दघनोऽस्म्यहम् ॥
नामरूपविमुक्तोऽहमहमानन्दविग्रहः ॥ आ-
दिचैतन्यमात्रोऽहमखण्डैकरसोऽस्म्यहम् ॥
सर्वत्र पूर्णरूपोऽहं परामृतरसोऽस्म्यहम् ॥
एकमेवाद्वितीयं सद्ब्रह्मैवाहं न संशयः ॥ अ-
हमेव परं ब्रह्म ह्यहमेव गुरोर्गुरुः ॥ सर्वज्ञानप्र-
काशोऽस्मि मुख्यविज्ञानविग्रहः ॥ तुर्यातु-
र्यप्रकाशोऽस्मि तुर्यातुर्यादिवर्जितः ॥ ११० ॥
दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वज-
मेकमक्षरम् ॥ अलेपकं सर्वगतं यदद्वयं तदेव
चाहं सकलं विमुक्तॐम् ॥ अहं ब्रह्मास्मि
मन्त्रोऽयं जन्मपापं विनाशयेत् ॥ अहं ब्र-
ह्मास्मि मन्त्रोऽयं भेदबुद्धिं विनाशयेत् ॥
अहं ब्रह्मास्मि मन्त्रोऽयं कोटिदोषं विनाश-

येत् ॥ अहं ब्रह्मास्मि मन्त्रोऽयं ज्ञानानन्दं प्रयच्छति ॥ सर्वमन्त्रान्समुत्सृज्य एतन्मन्त्रं समभ्यसेत् ॥ सद्यो मोक्षमवाप्नोति नास्ति संदेहमण्वपि ॥ इति स्वानुभूतिवाक्यानि अष्टादशोत्तरशतम् ॥ ११८ ॥

नवमं प्रकरणं समाप्तम्।

---

## सार्धान्तिकसमाधिवाक्यानि।

जीवात्मपरमात्मैक्यावस्था त्रिपुटिरहिता परमानन्दस्वरूपा शुद्धचैतन्यात्मिका समाधिः ॥ ध्यातृध्याने विहाय निवातस्थितदीपवद्ध्येयैकगोचरं चित्तं समाधिः ॥ वृत्तिशून्यं प्रचारशून्यं मनः परमात्मनि लीनं भवति ॥ प्राप्ते ज्ञानेन विज्ञाने ज्ञेये परमात्मनि हृदि संस्थिते देहे लब्धशान्तिपदं गते तदा प्रभा-

मनोबुद्धिशून्यं भवति ॥ प्राणापानयोरैक्यं कृत्वा धृतकुम्भको नासाग्रदर्शनदृढभावनया द्विकराङ्गुलिभिः षण्मुखीकरणेन प्रणवध्वनिं निशम्य मनस्तत्र लीनं भवति ॥ पयःस्रवानन्तरं धेनुस्तनक्षीरमिव सर्वेन्द्रियवर्गे परिनष्टे मनोनाशो भवति ॥ यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ॥ बुद्धिश्च न विचेष्टंती तामाहुः परमां गतिम् ॥ संशान्तसर्वसंकल्पा या शिलावदवस्थितिः ॥ जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥ १० ॥ मारुते मध्यसंचारे मनःस्थैर्यं प्रजायते ॥ यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी ॥ सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते ॥ निद्राघरूपनाशस्तु वर्तते देहमुक्तिके ॥ चित्ते चैत्यदशाहीने या स्थितिः क्षीणचेतसाम् ॥ सोच्यते शान्तकलना जाग्रत्येव सुषुप्तता ॥

नैतज्जाग्रन्न च स्वप्नः संकल्पानामभावनात् ॥ सुषुप्तभावो नाप्येतदभावाज्जडता स्थितेः ॥ सत्वावबोध एवासौ वासनातृणपावकः ॥ प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः ॥ २० ॥ निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ॥ वृत्तिविस्मरणं सम्यक्समाधिरभिधीयते ॥ दृश्यासंभवबोधेन रागद्वेषादितानवे ॥ रतिर्बलोदिता या सा समाधिरभिधीयते ॥ अहमेव परं ब्रह्म ब्रह्माहमिति संस्थितिः ॥ समाधिः स तु विज्ञेयः सर्ववृत्तिनिरोधकः ॥ समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ॥ ध्यानस्य विस्मृतिः सम्यक्समाधिरभिधीयते ॥ समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी ॥ ब्रह्मन्समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥ ३० ॥ अक्षुब्धा निरहंकारा द्वन्द्वेष्वननुपातिनी ॥ ब्रह्मन्समाधि-

शब्देन मेरोः स्थिरतरा स्थितिः ॥ निश्चिता विगताऽभीष्टा हेयोपादेयवर्जिता ॥ ब्रह्मन्समाधिशब्देन परिपूर्णमनोगतिः ॥ सलिले सैन्धवं यद्वत्साम्यं भजति योगतः ॥ तथात्ममनसोरैक्यं समाधिरभिधीयते ॥ यत्समत्वं तयोरत्र जीवात्मपरमात्मनोः ॥ समस्तनष्टसंकल्पः समाधिरभिधीयते ॥ प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ॥ सर्वशून्यं निराभासं समाधिरभिधीयते ॥ ४० ॥ ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना ॥ संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥ प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् ॥ असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥ स्वानुभूतिरसावेशाद्दृश्यशब्दावुपेक्षितुः ॥ निर्विकल्पसमाधिः स्यान्निवातस्थितदीपवत् ॥ प्रभाशून्यं मनःशून्यं बुद्धिशून्यं चिदात्मकम् ॥

अन्तर्व्याप्तिरूपोऽसौ समाधिर्मुनिभावितः ॥
ऊर्ध्वपूर्णमधःपूर्णं मध्यपूर्णं शिवात्मकम् ॥
साक्षाद्विधिमुखो ह्येष समाधिः पारमार्थिकः ॥
सार्धान्तिकसमाधिवाक्यानि पञ्चाशत् ॥ ५० ॥

दशमं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकाष्टविधस्वरूपवाक्येषु नानालिङ्गस्वरूपवाक्यानि ।

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः ॥ यो वै भूमा तत्सुखम् ॥ यो वै भूमा तदमृतम् ॥ नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयꣳ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेव सत्यम् ॥ रातिर्दातुः परायणम् ॥ स पर्यगाच्छु-क्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् ॥

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ॥ न निरोधो न चोत्पत्तिर्न वद्धो न च साधकः ॥ न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ अखण्डैकरसं शास्त्रमखण्डैकरसा त्रयी ॥ १० ॥
अखण्डैकरसो देह अखण्डैकरसं मनः ॥
अखण्डैकरसं सूत्रमखण्डैकरसो विराट् ॥
अखण्डैकरसा विद्या ह्यखण्डैकरसोऽव्ययः ॥
अखण्डैकरसं गोप्यमखण्डैकरसः शशी ॥
अखण्डैकरसं क्षेत्रमखण्डैकरसा क्षमा ॥
अखण्डैकरसास्तारा अखण्डैकरसो रविः ॥
अखण्डैकरसो ज्ञाता अखण्डैकरसा स्थितिः ॥
अखण्डैकरसा माता अखण्डैकरसः पिता ॥
अखण्डैकरसो राजा अखण्डैकरसं पुरम् ॥
अखण्डैकरसं तारमखण्डैकरसो जपः ॥ २० ॥
सर्ववर्जितचिन्मात्रं त्वत्ता मत्ता च चिन्मयम् ॥
आदिरन्तं च चिन्मात्रं गुरुशिष्यादि चि-

न्मयम् ॥ दृग्दृश्यं यदि चिन्मात्रमस्ति चेच्चिन्मयं सदा ॥ सर्वाश्चर्यं च चिन्मात्रं देहश्चिन्मात्रमेव हि ॥ अहं त्वं चैव चिन्मात्रं मूर्तामूर्तादि चिन्मयम् ॥ पुण्यं पापं च चिन्मात्रं जीवश्चिन्मात्रविग्रहः ॥ देहत्रयविहीनत्वात्कालत्रयविवर्जनात्॥ जीवत्रयगुणाभावात्तापत्रयविवर्जनात् ॥ लोकत्रयविहीनत्वात्सर्वमात्मेति शासनात् ॥ चित्ताभावाच्चिन्तनीयं देहभावाज्जरा न च ॥ पादाभावाद्गतिर्नास्ति हस्ताभावात्क्रिया न च ॥ ३० ॥ मृत्युर्नास्ति जनाभावाद्बुद्ध्यभावात्सुखादिकम् ॥ इति सार्धान्तिकनानालिङ्गस्वरूपवाक्यानि ॥ ३२ ॥

एकादशं प्रकरणं समाप्तम्

---

## सार्धान्तिकपुंलिङ्गस्वरूपवाक्यानि ।

स एषोऽकलोऽमृतः ॥ नान्तःप्रज्ञं न ब-

हिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः ॥ यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ॥ स एष नेतिनेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जतेऽसितो न व्यथते न रिष्यति ॥ रसघन एवैवं वाऽरेयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव ॥ तस्मान्मनो विलीने मनसि गते संकल्पविकल्पे दग्धे पुण्यपापे सदाशिवः ॥ ॐशक्त्यात्मिकः सर्वत्रावस्थितः स्वयंज्योतिः शुद्धो नित्यो निरञ्जनः शान्ततमः प्रकाशयति ॥ एष शुद्धः पूतः शून्यः शान्तोऽप्राणोऽनीशा-

त्मानन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठति ॥ चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा मनसो द्रष्टा वाचो द्रष्टा बुद्धेर्द्रष्टा प्राणस्य द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टा ततः सर्वस्मा-दन्यो विलक्षणः सद्घनोऽयं चिद्घन आनन्द-घन एवैकरसोऽव्यवहार्यः ॥ सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्व-यानन्दः परः प्रत्यगेकरसः ॥१०॥ अदृष्टोऽव्य-वहार्योऽप्यल्पो नाल्पः साक्ष्यविशेषः सर्व-ज्ञोऽनन्तोऽभिन्नोऽद्वयो विदिताविदितात्परः अद्वैतपरमानन्दो विभुर्नित्यो निष्कलङ्को नि-र्विकल्पो निरञ्जनो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् ॥ अचक्षुर्विश्वतश्चक्षुरकर्णो विश्वतःकर्ण अपादो विश्वतःपाद अपाणिर्विश्वतःपाणिरहमशिरा विश्वतःशिरा विद्यामात्रैकसंश्रयो विद्यारूपः ॥

दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ॥
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥
अपूर्वोऽनन्तरोऽबाह्यो न परः प्रणवोऽव्ययः ॥
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ॥
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ सर्वसंकल्परहितः सर्वनादमयः शिवः ॥ २० ॥ सर्ववर्जितचिन्मात्रः सर्वानन्दमयः परः ॥ सर्वानुभवनिर्मुक्तः सर्वध्यानविवर्जितः ॥ आत्मानात्मविवेकादिभेदाभेदविवर्जितः ॥ महावाक्यार्थतो दूरो ब्रह्मास्मीत्यतिदूरतः ॥ तच्छब्दवर्ज्यस्त्वंशब्दहीनो वाक्यार्थवर्जितः ॥ क्षराक्षरविहीनो यो नादान्तर्ज्योतिरेव सः ॥ अखण्डैकरसो वाहमानन्दोऽस्मीति वर्जितः ॥ दृश्यदर्शननिर्मुक्तः केवलामलरूपवान् ॥ नित्योदितो निराभासो

द्रष्टा साक्षी चिदात्मकः स एव विदिता-
दन्यस्तथैवाविदितादधि ॥ ३० ॥ इति सार्धा-
न्तिकपुंलिङ्गस्वरूपवाक्यानि त्रिंशत् ॥ ३० ॥

द्वादशं प्रकरणं समाप्तम् ।



## सार्धान्तिकस्त्रीलिङ्गस्वरूपवाक्यानि ।

अलौकिकपरमानन्दलक्षणाखण्डामिततेजोराशिः ॥ भावाभावकलाविनिर्मुक्ता चिद्विद्याऽब्रह्मसंवित्तिः ॥ सच्चिदानन्दलहरी महात्रिपुरसुन्दरी ॥ वहिरन्तरनुप्रविश्य स्वयमेकैव विभाति ॥ सर्वसंकल्परहिता सर्वसंज्ञाविवर्जिता ॥ सैषा चिदविनाशात्मा स्वात्मेत्यादिकृता भिदा ॥ आकाशशतभागाच्छा ज्ञेषु निष्कलरूपिणी ॥ नास्तमेति न चोदेति नोत्तिष्ठति न तिष्ठति ॥ न च याति न चायाति

न च नेह न चेह चित् ॥ सैषा चिदमलाकारा निर्विकल्पा निरास्पदा ॥ महाचिदेकैवेहास्ति महासत्तेति चोच्यते ॥ निष्कलङ्का समा शुद्धा निरहङ्काररूपिणी ॥ १० ॥ सकृद्विभाता विमला नित्योदयवती समा ॥ सा ब्रह्म परमात्मेति नामभिः परिगीयते ॥ इति स्त्रीलिङ्गस्वरूपवाक्यानि द्वादश ॥ १२ ॥

त्रयोदशं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकनपुंसकलिङ्गस्वरूपवाक्यानि ।

अन्यदेव तद्विदितादथो अविदितादधि ॥ यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ॥ सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ अस्थूलमनण्वह्रस्वमदीर्घमलो-

हितमस्नेहमच्छायमतमोवाय्वनाकाशमसङ्गम-
रसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्क-
मप्राणममुखममात्रमनन्तरमबाह्यम् ॥ नित्यं
शुद्धं बुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदा-
नन्दचिन्मात्रं पुरतः सुविभातमविभातमद्वैत-
मचिन्त्यमलिङ्गं स्वप्रकाशमानन्दघनम् ॥ एत-
द्ध्यशब्दमस्पर्शमरूपमरसमगन्धमव्यक्तमदात-
व्यमगन्तव्यमविसर्जयितव्यमनानन्दयितव्य-
ममन्तव्यमबोद्धव्यमनहंकर्तयितव्यमचेतयित-
व्यमप्राणयितव्यमपानयितव्यमव्यानयित-
व्यमनुदानयितव्यमसमानयितव्यमनिन्द्रिय-
मविषयमकरणमलक्षणमसङ्गमगुणमविक्रियम-
व्यपदेश्यमसत्वमरजस्कमतमस्कममायमभय-
मप्यौपनिषदमेव सुविभातं सकृद्विभातं पुर-
तोऽस्मात्सर्वस्मात्सुविभातमद्वयम् ॥ अनिर्वच-
नीयं ज्योतिः सर्वव्यापकं निरतिशयानन्द-

लक्षणं परमाकाशम् ॥ तद्ब्रह्म तापत्रया-
तीतं षट्कोशविनिर्मुक्तं षडूर्मिवर्जितं पञ्चको-
शातीतं षड्भावविकारशून्यमेवमादिसर्ववि-
लक्षणं निर्गुणं निरुपप्लवं ज्योतिराभ्यन्तरं
सर्वमायातीतमप्रत्यगेकरसमद्वितीयम् ॥ त-
ज्ज्योतिरेकमद्वितीयं सर्वकल्पनातीतं ध्रुवमक्ष-
रमेकं सदा चकास्ति सच्चिदानन्दम् ॥ १० ॥
यत्तत्सत्यं विज्ञानमानन्दं निष्क्रियं निरञ्जनं
सर्वगतं सुसूक्ष्मं सर्वतोमुखमनिर्देश्यममृतं
निष्कलम् ॥ एकमद्वैतं निष्कलं निष्क्रियं शान्तं
निरतिशयमनामयमद्वैतं चतुर्थं ब्रह्मविष्णुरु-
द्रातीतमेकमाशास्यम् ॥ अद्वयमनाद्यन्तमशेषवे-
दवेदान्तवेद्यमनिर्देश्यमनिरुक्तमप्रच्यवमाशा-
स्यमद्वैतं चतुर्थं सर्वाधारमनाधारमनिरीक्ष्यम् ॥
अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमग-
न्धवच्च यत् ॥ परं विज्ञानाद्यद्वरिष्ठं प्रजानां

यदर्चिमद्यदणुभ्योऽणु च॥ बृहच्च तद्दिव्यमचि-
न्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति॥
एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदि-
तव्यं हि किंचित्॥ अघोषमव्यञ्जनमस्वरं च
यत्तालुकण्ठोष्ठमनासिकं च यत्॥ अरेफजात-
मुभयोष्मवर्जितं यदक्षरं न क्षरते कथंचित्॥
अगोचरं मनोवाचामवधूतादिसंप्लवम्॥ २०॥
सत्तामात्रप्रकाशैकप्रकाशं भावनातिगम्॥
अहेयमनुपादेयमसामान्यविशेषणम्॥ ध्रुवं
स्तिमितगम्भीरं न तेजो न तमस्ततम्॥ नि-
ष्कलं निर्मलं शान्तं सर्वातीतं निरामयम्॥ न
शून्यं नापि चाकारि न दृश्यं नापि दर्शनम्॥
चिन्मात्रं चैत्यरहितमनन्तमजरं शिवम्॥
चैत्यानुपातरहितं सामान्येन च सर्वगम्॥
अनामयमनाभासमनामकमकारणम्॥ मनोव-
चोभ्यामग्राह्यं पूर्णात्पूर्णं सुखात्सुखम्॥ द्रष्टृ-

दर्शनदृश्यादिवर्जितं तदिदं पदम् ॥ ३० ॥ शुद्धं सूक्ष्मं निराकारं निर्विकारं निरञ्जनम्॥अप्रमाणमनिर्देश्यमप्रमेयमतीन्द्रियम् ॥ निर्लेपकं निरापायं कूटस्थमचलं ध्रुवम् ॥ सद्घनं चिद्घनं नित्यमानन्दघनमव्ययम् ॥ प्रत्यगेकरसं पूर्णमनन्तं विश्वतोमुखम् ॥ अहेयमनुपादेयमनादेयमनाश्रयम् ॥ शुद्धं बुद्धं सदा मुक्तमनामकमरूपकम् ॥ संकल्पसंक्षयवशाद्गलिते तु चित्ते सँसारमोहमिहिकागलिता भवन्ति ॥ स्वच्छं विभाति शरदीव खमागतायां चिन्मात्रमेकमजमाद्यमनन्तमन्तः ॥ ३९ ॥ सार्धान्तिकनपुंसकलिङ्गस्वरूपवाक्यान्येकोनचत्वारिंशत् ॥ ३९ ॥

चतुर्दशं प्रकरणं समाप्तम्

---

## सार्धान्तिकात्मस्वरूपवाक्यानि ।

आकाशो ह वै नाम नामरूपयोर्निर्वहिता

ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा ॥ इदं सर्वं यदयमात्मा ॥ चिदेकरसो ह्ययमात्मा ॥ अतो ह्ययमात्मा ॥ अनुज्ञाता ह्ययमात्मा ॥ अनुज्ञैकरसो ह्ययमात्मा ॥ अविकल्पो ह्ययमात्मा ॥ देहादेः परतरत्वाद्ब्रह्मैव परमात्मा ॥ अखण्डैकरसो ह्ययमात्मा ॥ निर्गुणः साक्षिभूतो निष्क्रियो निरवयव आत्मा ॥ १० ॥ विराजः पर आकाशादज आत्मा महान् ध्रुवः ॥ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥ निःशब्दं परमं ब्रह्म परमात्मा समीर्यते ॥ सकले निष्कले भावे सर्वत्रात्मा व्यवस्थितः ॥ सर्वदा सर्वकृत्सर्वः परमात्मेत्युदाहृतः ॥ अनाद्यन्तावभासात्मा परमात्मेह विद्यते ॥ नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ॥ तत्परः परमात्मा च श्रीरामः पुरुषोत्तमः ॥ सर्वकारणकार्यात्मा कार्यकारणवर्जितः ॥ स-

र्वातीतस्वभावात्मा नादांतज्योंतिरेव सः ॥ २० ॥ निर्विकल्पस्वरूपात्मा सविकल्पविवर्जितः ॥ सदा समाधिशून्यात्मा आदिमध्यान्तवर्जितः ॥ प्रज्ञानवाक्यहीनात्मा अहं ब्रह्मास्मिवर्जितः ॥ तत्त्वमस्यादिहीनात्मा अयमात्मेत्यभावकः ॥ ॐकारवाच्यहीनात्मा सर्ववाच्यविवर्जितः ॥ सर्वत्र पूर्णरूपात्मा सर्वत्रात्मावशेषकः ॥ शुद्धचैतन्यरूपात्मा सर्वसिद्धिविवर्जितः ॥ आनन्दात्मा प्रियो ह्यात्मा मोक्षात्मा बन्धवर्जितः ॥ शून्यात्मा सूक्ष्मरूपात्मा विश्वात्मा विश्वहीनकः॥सत्तामात्रस्वरूपात्मा नान्यत्किंचिज्जगद्भयम् ॥३०॥ अपरिच्छिन्नरूपात्मा अणुस्थूलादिवर्जितः ॥ नामरूपविहीनात्मा परसंवित्सुखात्मकः ॥ साक्ष्यसाक्षित्वहीनात्मा किंचित्किंचिन्न किंचन ॥ मुक्तामुक्तस्वरूपात्मा मुक्तामुक्तविवर्जितः ॥ द्वैताद्वैतस्वरूपात्मा द्वैता-

द्वैतादिवर्जितः॥ निष्कलात्मा निर्मलात्मा बुद्ध्यात्मा पुरुषात्मकः॥ आत्मेतिशब्दहीनो य आत्मशब्दार्थवर्जितः॥ सच्चिदानन्दहीनो य एषैवात्मा सनातनः॥ यस्य किंचिद्बहिर्नास्ति किंचिदन्तः कियन्न च॥ यस्य लिङ्गं प्रपञ्चं वा ब्रह्मैवात्मा न संशयः॥ इति सार्धान्तिकात्मस्वरूपवाक्यानि चत्वारिंशत्॥ ४०॥

पंचदशं प्रकरणं समाप्तम्।

---

## सार्धान्तिकसर्वस्वरूपवाक्यानि।

ॐकार एवेदं सर्वम्॥॥ स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वम्॥ अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वम्॥ आत्मैवाधस्तादात्मोप-

रिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वम् ॥ आत्मैव वेद-ममृतमिदं ब्रह्मेदं सर्वम् ॥ एतद्ब्रह्मैतत्सर्वम् ॥ नारायण एवेदं सर्वम् ॥ सच्चिदानन्दरूपमिदं सर्वम् ॥ सत्तामात्रं हीदं सर्वं मत्स्वरूपमेवेदं सर्वम् ॥ १० ॥ स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् ॥ स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः ॥ स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किंचन ॥ मरुभूमौ जलं सर्वं मरुभूमात्रमेव तत् ॥ जगत्त्रयमिदं सर्वं चिन्मात्रं स्वविचारतः ॥ भववर्जितचिन्मात्रं सर्वं चिन्मात्रमेव हि ॥ यत्किंचिद्यन्न किंचिच्च सर्वं चिन्मात्रमेव हि ॥ अखण्डैकरसं सर्वं यद्यच्चिन्मात्रमेव हि ॥ भूतं भव्यं भविष्यच्च सर्वं चिन्मात्रमेव हि ॥ ज्ञाता चिन्मात्ररूपश्च सर्वं चिन्मात्रमेव हि ॥२०॥ यच्च यावच्च दूरस्थं सर्वं चिन्मात्रमेव हि ॥ चि-

न्मात्रान्नास्ति लक्ष्यं च सर्वं चिन्मात्रमेव हि ॥
आत्मनोऽन्या गतिर्नास्ति सर्वमात्ममयं जगत् ॥
आत्मनोऽन्यत्तुषं नास्ति सर्वमात्ममयं जगत् ॥
सर्वमात्मैव शुद्धात्मा सर्वं चिन्मात्रमद्वयम् ॥
सर्वं च खल्विदं ब्रह्म नित्यचिद्घनमक्षतम् ॥
समस्तं खल्विदं ब्रह्म सर्वमात्मेदमाततम् ॥ न
त्वं नाहं न चान्यं वा सर्वं ब्रह्मैव केवलम् ॥
न तदस्ति न यत्राहं न तदस्ति न तन्मयम् ॥
किमन्यदभिवाञ्छामि सर्वं सच्चिन्मयं ततम्
॥ ३० ॥ भ्रान्तिरभ्रान्तिर्नास्त्येव सर्वं ब्र-
ह्मैव केवलम् ॥ न देहो न च कर्माणि सर्वं
ब्रह्मैव केवलम् ॥ लक्षणात्रयविज्ञानं सर्वं ब्रह्मैव
केवलम् ॥ जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव
केवलम् ॥ ब्रह्ममात्रमिदं सर्वं ब्रह्ममात्रमस-
न्नहि ॥ ब्रह्ममात्रव्रतं सर्वं ब्रह्ममात्ररसं सु-
खम् ॥ ब्रह्ममात्रं श्रुतं सर्वं स्वयं ब्रह्मैव

केवलम् ॥ ब्रह्मैव सर्वं चिन्मात्रं ब्रह्ममात्रं जगत्त्रयम् ॥ सर्वं प्रशान्तमजमेकमनादिमध्य-माभास्वरं स्वदनमात्रमचैत्यचिह्नम् ॥ सर्वं प्रशान्तमिति शब्दमयी च दृष्टिर्बोधार्थमेव हि मुधैव तदोमितीदम् ॥ ४० ॥ इति सार्धा-न्तिकसर्वस्वरूपवाक्यानि चत्वारिंशत् ॥

षोडशं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकब्रह्मस्वरूपवाक्यानि ।

सर्वं ह्येतद्ब्रह्म ॥ अयमात्मा ब्रह्म ॥ सत्यं ज्ञानमनन्तं ब्रह्म ॥ प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥ तदेतद्ब्रह्माऽपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः ॥ विज्ञानमानन्दं ब्रह्म ॥ अजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्म ॥ सर्वभूतस्थमेकं नारायणं कारणपुरुषमकारणं परं ब्रह्मोम् ॥ स्वयंप्रकाशः स्वयंब्रह्म ॥ तदे

तदद्वयं स्वयंप्रकाशमहानन्दमात्मैवैतदभयम-
मृतमेतद्ब्रह्म ॥ १० ॥ सदेव पुरस्तात्सिद्धं
ब्रह्म ॥ आकाशवत्सूक्ष्मं केवलसत्तामात्रस्व-
भावं परं ब्रह्म ॥ अद्वितीयमखिलोपाधिवि-
निर्मुक्तं तत्सकलशक्त्युपबृंहितमनाद्यनन्तं
नित्यं शिवं शान्तं निर्गुणमित्यादिवाच्यमनि-
र्वाच्यं चैतन्यं ब्रह्म ॥ एकमेवाद्वितीयं
ब्रह्म ॥ सर्वदानवच्छिन्नं परं ब्रह्म ॥ सच्चिदा-
नन्दतेजःकूटरूपं तारकं ब्रह्म ॥ तन्नित्य-
मुक्तमविक्रियं सत्यज्ञानानन्तानन्दपरिपूर्णं
सनातनमेकमेवाद्वितीयं ब्रह्म ॥ चित्स्वरूपं नि-
रञ्जनं परं ब्रह्म ॥ तत्त्वंपदलक्ष्यं प्रत्यगभिन्नं
ब्रह्म ॥ अखण्डार्थं परं ब्रह्म ॥ २० ॥ सर्व-
कालाबाधितं ब्रह्म ॥ सगुणनिर्गुणस्वरूपं
ब्रह्म ॥ आदिमध्यान्तशून्यं ब्रह्म ॥ मायाती-
तगुणातीतं ब्रह्म ॥ अनन्तमप्रमेयाखण्डपरि-

पूर्णं ब्रह्म ॥ अद्वितीयपरमानन्दनित्यशुद्धबुद्ध-
मुक्तसत्यस्वरूपव्यापकाभिन्नापरिच्छिन्नं ब्रह्म॥
सच्चिदानन्दस्वप्रकाशं ब्रह्म ॥ मनोवा-
चामगोचरं ब्रह्म ॥ देशतः कालतो वस्तुतः
परिच्छेदरहितं ब्रह्म ॥ अखिलप्रमाणागोचरं
ब्रह्म ॥ ३० ॥ तुरीयं निराकारमेकं ब्रह्म ॥
अद्वैतमनिर्वाच्यं ब्रह्म ॥ शिवं प्रशान्तममृतं
परं च ब्रह्म ॥ यदेकमक्षरं निष्क्रियं शिवं
सन्मात्रं परं ब्रह्म ॥ असावादित्यो ब्रह्म ॥
ॐमित्येतदक्षरं परं ब्रह्म ॥ ब्रह्मैवेदममृतं पु-
रस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ॥ अध-
श्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥
तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ॥
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि
॥ ४० ॥ ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरू-
पकम् ॥ एतद्भावविनिर्मुक्तं तद्ब्रह्म ब्रह्म त-

त्परम् ॥ चिन्मात्रात्परमं ब्रह्म चिन्मात्रा-
न्नास्ति कोऽपि हि ॥ अखण्डैकरसं ब्रह्म
चिन्मात्रान्नहि विद्यते ॥ सदोदितं परं ब्रह्म
ज्योतिषामुदयो यतः ॥ यस्मिन्प्रलीयते शब्द-
स्तत्परं ब्रह्म गीयते ॥ सर्वशक्ति परं ब्रह्म
नित्यमापूर्णमद्वयम् ॥ सत्ता सर्वपदार्थानां गम्यं
ब्रह्माभिधं पदम् ॥ परं ब्रह्म परं सत्त्वं सच्चि-
दानन्दलक्षणम् ॥ अक्षरं परमं ब्रह्म निर्विशेषं
निरञ्जनम् ॥ ५० ॥ ब्रह्मैवैकमनाद्यन्तमब्धि-
वत्प्रविजृम्भते ॥ न किंचिद्भावनाकारं यत्त-
द्ब्रह्म परं विदुः ॥ एकमेवाद्वयं ब्रह्म नेह
नानास्ति किंचन ॥ ब्रह्मैव विद्यते साक्षाद्व-
स्तुतोऽवस्तुतोऽपि च ॥ तद्विद्याविषयं ब्रह्म
सत्यज्ञानसुखाद्वयम् ॥ शान्तं च तदतीतं च
परं ब्रह्म तदुच्यते ॥ अनुभूतिपरं तस्मात्सारं
ब्रह्मेति कथ्यते ॥ यदिदं ब्रह्म पुच्छाख्यं

सत्यज्ञानाद्वयात्मकम् ॥ सद्रूपं परमं ब्रह्म त्रि-परिच्छेदवर्जितम् ॥ तद्ब्रह्मानन्दमद्वन्द्वं नि-र्गुणं सत्यचिद्घनम् ॥ ६० ॥ सर्वाधिष्ठा-नमद्वन्द्वं परं ब्रह्म सनातनम् ॥ प्रज्ञानमेव तद्ब्रह्म सत्यप्रज्ञानलक्षणम् ॥ अस्तीत्युक्ते जगत्सर्वं सद्रूपं ब्रह्म तद्भवेत् ॥ भातीत्युक्ते जगत्सर्वं भानं ब्रह्मैव केवलम् ॥ ब्रह्ममात्रं चिदाकाशं सच्चिदानन्दमद्वयम् ॥ ब्रह्मणो-ऽन्यतरन्नास्ति ब्रह्मणोऽन्यज्जगन्न च ॥ ब्र-ह्मणोऽन्यदहं नास्ति ब्रह्मणोऽन्यत्फलं नहि ॥ ब्रह्मणोऽन्यत्तृणं नास्ति ब्रह्मणोऽन्यत्पदं नहि ॥ ब्रह्मणोऽन्यद्गुरुर्नास्ति ब्रह्मणोऽन्यदसद्वपुः ॥ नित्यानन्दमयं ब्रह्म केवलं सर्वदा स्वयम् ॥ ७० ॥ बीजं मायाविनिर्मुक्तं परं ब्रह्मेति कीर्त्यते ॥ मद्रूपमद्वयं ब्रह्म आदिमध्यान्तव-र्जितम् ॥ सर्वत्रावस्थितं शान्तं चिद्ब्रह्मेत्यनु-

भूयते ॥ सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि॥नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम् ॥ स्वात्मन्यारोपिताशेषाभासवस्तुनिरासतः ॥ स्वयमेव परं ब्रह्म पूर्णमद्वयमक्रियम् ॥ राम एव परं ब्रह्म राम एव परं तपः ॥ राम एव परं तत्त्वं श्रीरामो ब्रह्म तारकम् ॥ चिद्रूपमात्रं ब्रह्मैव सच्चिदानन्दमद्वयम् ॥ ८० ॥ ऋतं सत्यं परं ब्रह्म सर्वसंसारभेषजम् ॥ ब्रह्म चिद्ब्रह्म भुवनं ब्रह्म भूतपरम्परा ॥ ब्रह्माहं ब्रह्म चिच्छत्रुर्ब्रह्म चिन्मित्रबान्धवाः ॥ ब्रह्मरूपतया ब्रह्म केवलं प्रतिभासते ॥ जगद्रूपतयाप्येतद्ब्रह्मैव प्रतिभासते ॥ विद्याविद्यादिभेदेन भावाभावादिभेदतः ॥ गुरुशिष्यादिभेदेन ब्रह्मैव प्रतिभासते ॥ इदं ब्रह्म परं ब्रह्म सत्यं ब्रह्म प्रभुर्हि सः ॥ कालो ब्रह्म कला ब्रह्म सुखं ब्रह्म

स्वयंप्रभम् ॥ एकं ब्रह्म द्वयं ब्रह्म मोहो ब्रह्म शमादिकम् ॥ दोषो ब्रह्म गुणो ब्रह्म दमः शान्तं विभुः प्रभुः ॥ ९० ॥ लोको ब्रह्म गुरुर्ब्रह्म शिष्यो ब्रह्म सदाशिवः॥ पूर्वं ब्रह्म परं ब्रह्म शुद्धं ब्रह्म शुभाशुभम् ॥ जीव एव सदा ब्रह्म स्वयं ब्रह्म सनातनम् ॥९३॥ इति सार्धान्तिकब्रह्मस्वरूपवाक्यानि त्रिनवतिः ॥

सप्तदशं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकावशिष्टवाक्यानि ।

सर्वविशेषं नेतिनेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म ॥ जीवभावजगद्भावबाधे प्रत्यगभिन्नं ब्रह्मैवावशिष्यते ॥ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ कार्योपाधिरयं

जीवः कारणोपाधिरीश्वरः ॥ कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥ ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ॥ अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥ संकल्पमनसी भिन्ने न कदाचन केनचित् ॥ संकल्पजाते गलिते स्वरूपमवशिष्यते ॥ १० ॥ महाप्रलयसंपत्तौ ह्यसत्तां समुपागते ॥ अशेषदृश्ये सर्गादौ शान्तमेवावशिष्यते ॥ खेदोल्लासविलासेषु स्वात्मकर्तृतयानया ॥ स्वसंकल्पे क्षयं याते समतैवावशिष्यते ॥ समता सर्वभावेषु यासौ सत्यपरा स्थितिः ॥ परमामृतनाम्नी सा समतैवावशिष्यते ॥ कालत्रयमुपेक्षित्वा हीनायाश्चैत्यबन्धनैः ॥ चितश्चैत्यमुपेक्षिन्त्र्याः समतैवावशिष्यते ॥ सा हि वाचामगम्यत्वादसत्तामिव शाश्वतीम् ॥ नैरात्म्यसिद्धान्तदशामुपयातेऽवशिष्यते ॥ २० ॥

यावद्यावन्मुनिश्रेष्ठ स्वयं संत्यज्यतेऽखिलम् ॥
तावत्तावत्परालोकः परमात्मैव शिष्यते ॥ अ-
भ्यासेन परिस्पन्दे प्राणानां क्षयमागते ॥
मनः प्रशममायाति निर्वाणमवशिष्यते ॥ ज्ञे-
यवस्तुपरित्यागे विलयं याति मानसम् ॥
मानसे विलयं याते कैवल्यमवशिष्यते ॥ यतो
वाचो निवर्तन्ते विकल्पकलनान्विताः ॥
विकल्पसंक्षयाज्जन्तोः पदं तदवशिष्यते ॥
चिद्व्योमैव किलास्तीह परापरविवर्जितम् ॥
सर्वत्रासंभवच्चैत्यं यत्कल्पान्तेऽवशिष्यते
॥ ३० ॥ पञ्चरूपपरित्यागादर्थरूपप्रहाणतः ॥
अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥
सर्ववेदान्तसिद्धान्तसारं वच्मि यथार्थतः ॥
स्वयं मृत्वा स्वयं भूत्वा स्वयमेवावशिष्यते ॥
अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यम-
गन्धवच्च यत् ॥ अनाद्यनन्तं महतः परं ध्रुवं

तदेव शिष्यत्यमलं निरामयम् ॥ ३६ ॥ इति सार्धान्तिकावशिष्टवाक्यानि षट्त्रिंशत् ॥

अष्टादशं प्रकरणं समाप्तम् ।

---

## सार्धान्तिकफलवाक्यानि ।

स यो ह वै तत्परमम् ॥ ब्रह्म वेद ब्रह्मैव भवति ॥ ब्रह्मविदाप्नोति परम् ॥ ब्रह्मसंस्थोऽमृतत्वमेति ॥ तरति शोकमात्मवित् ॥ य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति ॥ स एष विमुक्तो विदुष्कृतो ब्रह्मविद्विद्वान्ब्रह्मैवाभिप्रैति ॥ य एवं निर्बीजं वेद निर्बीज एव स भवति तद्ब्रह्मैवाहमस्मीति ब्रह्मप्रणवमनुस्मरन् भ्रमरकीटन्यायेन शरीरत्रयमुत्सृज्य संन्यासेनैव देहत्यागं करोति स कृतकृत्यो भवति ॥ तमेवं ज्ञात्वा विद्वान्मृत्यु-

मुखात्प्रमुच्यते ॥ तदेवं विद्वांस इहैवामृता भवन्ति ॥ १० ॥ अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥ यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ॥ तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ॥ तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ २० ॥ तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ॥ यत्र यत्र मृतो ज्ञानी परमाक्षरवित्सदा ॥

परब्रह्मणि लीयते न तस्योत्क्रान्तिरिष्यते ॥
यद्यत्स्वाभिमतं वस्तु तत्त्यजन्मोक्षमश्नुते ॥
असंकल्पनशस्त्रेण छिन्नं चित्तमिदं यदा ॥
सर्वं सर्वगतं शान्तं ब्रह्म संपद्यते तदा ॥ प्रि-
येषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ॥ वि-
सृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥
घटाकाशमिवात्मानं विलयं वेत्ति तत्त्वतः ॥
स गच्छति निरालम्बं ज्ञानालोकं सनातनम्
॥ ३० ॥ तृणाग्रेष्वम्बरे भानौ नरनागामरेषु
च ॥ यस्तिष्ठति तदेवाहमिति मत्वा न शो-
चति ॥ सर्वसाक्षिणमात्मानं वर्णाश्रमविव-
र्जितम् ॥ ब्रह्मरूपतया पश्यन्ब्रह्मैव भवति
स्वयम् ॥ तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचि-
द्घनम् ॥ विदित्वा स्वात्मनो रूपं न बिभेति
कुतश्चन ॥ वासनां संपरित्यज्य मयि चिन्मा-
त्रविग्रहे ॥ यस्तिष्ठति गतस्नेहः सोऽहं सच्चि-

रसुखात्मकः ॥ दर्शनादर्शने हित्वा स्वयं केवलरूपतः ॥ य आस्ते कपिशार्दूल ब्रह्म न ब्रह्मवित्स्वयम् ॥ ४० ॥ सार्धान्तिकफलवाक्यानि चत्वारिंशत् ॥

एकोनविंशं प्रकरणं समाप्तम् ।



## सार्धान्तिकविदेहमुक्तिवाक्यानि ।

विमुक्तश्च विमुच्यते॥गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ अथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति ॥ तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव अशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदा-

नन्दमात्रः स स्वराट् भवति ॥ पृथिव्यप्सु प्रलीयत आपो ज्योतिषि लीयन्ते ज्योतिर्वायौ विलीयते वायुराकाश आकाशमिन्द्रियेष्वि-न्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ विलीयन्ते भूतादिर्महति विलीयते महानव्यक्ते विलीयते व्यक्तमक्षरे विलीयतेऽक्षरं तमसि विलीयते तमः परे देव एकीभवति परस्तान्न सन्नासन्न सदसत् ॥ ब्रह्माण्डं तद्गतलोका-न्कार्यरूपांश्च कारणत्वं प्रापयित्वा ततः सू-क्ष्माङ्गं कर्मेन्द्रियाणि प्राणाश्च ज्ञानेन्द्रियाण्य-न्तःकरणचतुष्टयं चैकीकृत्य सर्वाणि भौतिकानि कारणे भूतपञ्चके संयोज्य भूमिं जले जलं वह्नौ वह्निं वायौ वायुमाकाशे चाकाशमहं-कारे चाहंकारं महति महदव्यक्ते अव्यक्तं पुरुषे क्रमेण विलीयते विराट् हिरण्यगर्भेश्वरा उपाधिविलयात्परमात्मनि लीयन्ते ॥ प्रारब्ध-

क्षयवशाद्देहत्रयभङ्गं प्राप्योपाधिनिर्मुक्तघटाकाशवत्परिपूर्णता विदेहमुक्तिः ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १० ॥ वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥ ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ तस्याभिध्यानाद्योजनातत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ॥ जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ॥ विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ततस्तत्संबभूवासौ यद्गिरामप्यगोचरम् ॥ यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां च यत् ॥ विज्ञानमात्रं विज्ञानविदां यदमलात्मकम् ॥ पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ॥ शिवः शैवागमस्थानां कालः कालैकवादिनाम् ॥ २० ॥ यत्सर्वशा-

स्त्रसिद्धान्तं यत्सर्वहृदयानुगम् ॥ यत्सर्वं सर्वगं वस्तु यत्तत्त्वं तदसौ स्थितः ॥ यदनुक्तमनिष्पन्दं दीपकं तेजसामपि ॥ स्वानुभूत्यैकमानं च यत्तत्त्वं तदसौ स्थितः ॥ यदेकं चाप्यनेकं च साञ्जनं च निरञ्जनम् ॥ यत्सर्वं चाप्यसर्वं च यत्तत्त्वं तदसौ स्थितः ॥ निरानन्दोऽपि सानन्दः सच्चासच्च बभूव सः ॥ न चेतनो न च जडो न चैवासन्न सन्मयः ॥ अजममरमनाद्यमाद्यमेकं पदममलं सकलं च निष्कलं च ॥ स्थित इति स तदा नभस्वरूपादपि विमलस्थितिरीश्वरक्षणेन ॥ ३० ॥ व्यपगतकलनाकलङ्कशुद्धः स्वयममलात्मनि पावने पदेऽसौ ॥ सलिलकण इवाम्बुधौ महात्मा विगलितवासनमेकतां जगाम ॥ संशान्तदुःखमजडात्मकमेकसुप्तमानन्दमन्थरमपेतरजस्तमो यत् ॥ आकाशकोशतनवोऽतनवो

महान्तस्तस्मिन्पदे गलितचित्तलवा भवन्ति ॥ विदेहमुक्त एवासौ विद्यते निष्कलात्मकः ॥ समग्राग्र्यगुणाधारमपि सत्त्वं प्रलीयते ॥ विदेहमुक्तौ विमले पदे परमपावने ॥ विदेहमुक्तिविषये तस्मिन्सत्वक्षयात्मके ॥ चित्तनाशे विरूपाख्ये न किंचिदिह विद्यते ॥ न गुणा नागुणास्तत्र न श्रीर्नाश्रीर्न चैकता ॥ ४० ॥ जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ॥ उपाधिनाशाद्ब्रह्मैव सन्ब्रह्माप्येति निर्द्वयम् ॥ शास्त्रेण नश्येत्परमार्थदृष्टिः कार्यक्षमं नश्यति चापरोक्षात् ॥ प्रारब्धनाशात्प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया ॥ अहिनिर्ल्वयनी सर्पनिर्मुक्तो जीववर्जितः ॥ वल्मीके पतितस्तिष्ठेत्तं सर्पो नाभिमन्यते ॥ एवं स्थूलं च सूक्ष्मं च शरीरं नाभिमन्यते ॥ प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥ नेति-

नेतीति रूपत्वादशरीरो भवत्ययम् ॥ विश्वश्च तैजसश्चैव प्राज्ञश्चेति च ते त्रयः ॥ ५०. ॥ विराड्डिरण्यगर्भश्च ईश्वरश्चेति ते त्रयः ॥ ब्रह्माण्डं चैव पिण्डाण्डं लोका भूरादयः क्रमात्॥ स्वस्वोपाधिलयादेव लीयन्ते प्रत्यगात्मनि ॥ तूष्णीमेव स्थितस्तूष्णीं तूष्णीं सत्यं न किंचन ॥ कालभेदं वस्तुभेदं देशभेदं स्वभेदकम् ॥ किंचिद्भेदो न तस्यास्ति किंचिद्वापि न विद्यते ॥ जीवेश्वरेति वा क्वेति वेदशास्त्राः क्वाहं त्विति ॥ इदं चैतन्यमेवेति अहं चैतन्यमित्यपि ॥ इति निश्चयशून्यो यो वैदेही मुक्त एव सः ॥ ब्रह्मभूतः प्रशान्तात्मा ब्रह्मानन्दमयः सुखी ॥ ६० ॥ स्वच्छरूपो महामौनी वैदेही मुक्त एव सः ॥ ब्रह्मैवाहं चिदेवाहमेवं वापि न चिन्त्यते ॥ चिन्मात्रेणैव यस्तिष्ठेद्वै-

देही मुक्त एव सः ॥ चैतन्यमात्रसंसिद्धः स्वात्मारामः सुखासनः ॥ तुर्यतुर्यः परानन्दो वैदेही मुक्त एव सः ॥ यस्य प्रपञ्चभानं न ब्रह्माकारमपीह न ॥ अतीतातीतभावो यो वैदेही मुक्त एव सः ॥ चित्तवृत्तेरतीतो यश्चित्तवृत्त्यवभासकः ॥ सर्ववृत्तिविहीनात्मा वैदेही मुक्त एव सः ॥ सर्वत्रैवाहमात्मास्मि परमात्मा परात्मकः ॥ ७० ॥ नित्यानन्दस्वरूपात्मा वैदेही मुक्त एव सः ॥ जीवात्मा परमात्मेति चिन्तासर्वस्ववर्जितः ॥ सर्वसंकल्पहीनात्मा वैदेही मुक्त एव सः ॥ आत्मज्ञेयादिहीनात्मा यत्किंचिदिदमात्मकः ॥ भावाभावविहीनात्मा वैदेही मुक्त एव सः ॥ ॐकारवाच्यहीनात्मा सर्ववाच्यविवर्जितः ॥ अवस्थात्रयहीनात्मा वैदेही मुक्त एव सः ॥७७॥

इति सार्धान्तिकविदेहमुक्तिवाक्यानि सप्तसप्ततिः ॥

इत्येवं सार्धान्तिकविध्यादिविदहकैवल्यान्तमहावाक्यान्यष्टोत्तरसहस्रम् ॥ १००८ ॥

विंशं प्रकरणं समाप्तम् ।

---

## उपसंहारः ।

विध्यङ्घ्रिर्बन्धमुग्गुल्फो ह्यविद्धद्धेयजङ्घकः ॥ जगन्मिथ्या जानुदेशस्तूपदेशोरुदेशकः ॥ ब्रह्मात्मैक्यकटीदेशो विद्वन्मनननाभिकः ॥ जीवन्मुक्ताख्यदहरः स्वानुभूतिकरद्वयः ॥ स्वसमाधिस्कन्धदेशः स्वस्वरूपाख्यकन्धरः ॥ फलभूतमहावाक्यफलो वैदेहमस्तकः ॥ एवं विध्याद्यदेहान्तमहावाक्यकलेवरः ॥ वस्तुतो निर्विशेषात्मा त्रिपान्नारायणोऽस्म्यहम् ॥

यन्महावाक्यसिद्धान्तं मुक्तचित्तैकगोचरम् ॥
वासुदेवेन्द्रसंज्ञं तं नौमि सर्वात्मकं महः ॥

इत्युपसंहारः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासु-
देवेन्द्रसरस्वतीचरणकमलमकरन्दतृप्तस्वा-
न्तरामचन्द्रेन्द्रग्रथितेशावास्याद्यष्टो-
त्तरशतोपनिषत्सारसंग्रहभूता-
ष्टोत्तरसहस्रमहावाक्यरत्ना-
वलिः संपूर्णा ॥

# निर्णयसागरीयविक्रेयपुस्तकानि ।

| | रु० | डा० |
|---|---|---|
| **नाट्यशास्त्र**—श्रीभरतमुनिप्रणीत. ... | ३ | ·।· |
| **काव्यानुशासन**—श्रीमद्वाग्भटविरचित, स्वकृत टीकेसहित. ... ... | ·।≡ | ०- |
| **शृङ्गारतिलकभाण**—श्रीरामभद्रदीक्षित-विरचित. ... ... ... | ·।= | ०- |
| **बालभारत**—श्रीमदमरचन्द्रसूरिविरचित. | ३। | ०≡॥ |
| **वृषभानुजानाटिका**—श्रीमथुरादासकृत. | ·।= | ०- |
| **सेतुबन्धमहाकाव्य**—श्रीप्रवरसेनविरचित, श्रीरामदासभूपतिप्रणीत टीकेसहित. | ३। | ०≡ |
| **वाग्भटालंकार**—श्रीवाग्भटप्रणीत, सिंहदेवगणिविरचित टीकेसहित. ... | ·॥· | ०- |
| **द्विसंधानमहाकाव्य**—श्रीधनंजयविरचित, बदरीनाथविरचित टीकेसहित. | १॥ | ०-॥ |
| **अलंकारशेखर**—श्रीमाणिक्यचन्द्रकारित, श्रीकेशवमिश्रकृत. ... ... | ·॥- | ०- |
| **पतञ्जलिचरित**—श्रीरामभद्रदीक्षितप्रणीत. | ·॥= | ०- |
| **मन्दारमरन्दचम्पू**—श्रीकृष्णकविकृत. | १। | ०= |
| **वाणीभूषण**—श्रीदामोदरमिश्रविरचित. | ·।= | ०- |

| | रु० | डा० |
|---|---|---|
| धनंजयविजय—श्रीकाञ्चनाचार्यविरचित. | ०≡ | ०॥ |
| अद्भुतदर्पणनाटक—श्रीमहादेवकविकृत. | ।॥। | ०– |
| नेमिनिर्वाणकाव्य—महाकविश्रीवाग्भट-विरचित. ... ... ... | ।॥= | ०– |
| राघवनैषधीयकाव्य—श्रीहरदत्तसूरिकृत, स्वकृतटीकेसहित. ... ... | ।॥ | ०– |
| शृङ्गारभूषणभाण—वामनभट्टवाणकृत. | ०≡ | ०॥ |
| अमृतोदयनाटक—श्रीमद्गोकुलनाथकृत. | ।॥। | ०– |
| युधिष्ठिरविजय काव्य— महाकविश्रीवासुदेवविरचित, राजानकरत्नकण्ठकृत टीकेसहित. ... ... | १॥ | ०= |
| हरचरितचिन्तामणि काव्य—राजानकजयरथकृत. ... ... | १॥। | ०= |
| राघवपाण्डवीय काव्य—कविराजविरचित, शशधरकृत ( प्रकाश ) टीकेसहित. | १। | ०–॥ |
| साहित्यकौमुदी—( अलंकार ) श्रीविद्याभूषणविरचित. ... ... | १॥ | ०= |
| प्राचीनलेखमाला—( द्वितीय भाग ). | १॥ | ०= |
| भारतमञ्जरीकाव्य—श्रीक्षेमेन्द्रविरचित. | ५ | ।– |

# विक्रेयसंस्कृतपुस्तकानि ।

| | किं. | ट. ख. |
|---|---|---|
| **अलंकारकौस्तुभ**—(अलंकार) श्रीविश्वेश्वरपण्डितविरचित स्वोपज्ञव्याख्येसहित. | ३ | ०≡ |
| **वीरसौभाग्य काव्य**—श्रीदेवविमलगणिविरचित, स्वोपज्ञव्याख्येसहित. ... | ५॥ | ।= |
| **रावणार्जुनीय काव्य**—काश्मीरिकश्रीभट्टभीमविरचित. ... ... ... | १। | ०-॥ |
| **बृहत्कथामञ्जरी**—श्रीक्षेमेन्द्रविरचित | ३॥। | ।० |
| **यशस्तिलक**—श्रीसोमदेवसूरिविरचित श्रीश्रुतसागरसूरिकृत व्याख्येसहित पूर्वखण्ड. | ३॥। | ।० |
| **काव्यानुशासन**—आचार्यहेमचन्द्रविरचित, स्वोपज्ञालंकारचूडामणिसंज्ञकवृत्तिसहित. | २। | ०= |
| **कथाकौतुक**—पण्डितश्रीवरविरचित. | ०॥। | ०- |
| **सुरतोत्सव**—श्रीसोमेश्वरदेवविरचित. | ०॥।= | ०-॥ |
| **सौगन्धिकाहरण**—श्रीमद्विश्वनाथकविरचित. | ।० | ०- |
| **जयन्तविजय**—श्रीमदभयदेवविरचित. | १ | ०-॥ |
| **गङ्गावतरण**—श्रीनीलकण्ठदीक्षितविरचित. | ०॥० | ०- |
| **देलरामाकथासार**—राजानकभट्टाह्लादकविरचित. ... ... ... | ।= | ०- |

